ड्डुत्वादिपाकादिष्वेवमेव पाकादित्वं बालवृद्धशु
कायुदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्य
मानेषु डित्थाद्यर्थेषु वा डित्थादित्वमस्तीति सर्वेषां
शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये ॥ तद्वान
पोहोवाशब्दार्थः कैश्चिदुक्तइति ग्रन्थगौरवभ
यात् प्रकृतानुपयोगाच्च न दर्शितं ॥ समुख्योऽर्थ
स्तत्र मुख्योव्यापारोस्याभिधोच्यते ॥ सइति साक्षा
त्सङ्केतितः अस्येति शब्दस्य ॥ मुख्यार्थबाधे तद्योगे
रूढितोऽथ प्रयोजनात् । अन्योर्थोलक्ष्यते यत्सा
लक्षणारोपिता क्रिया ॥ कर्म्मणि कुशलइत्यादौ
योगात् गङ्गायां घोषइत्यादौ च गङ्गा
घोषाद्याधारासम्भवात् मुख्यस्यार्थस्य बाधे
त्वादौ सामीप्येच सम्बन्धे रू[illegible]सिद्धेः॥
इत्यादेः प्रयोगात् येषां न तथा
पावनत्वादीनां धर्म्माणां तथा प्रति
त्मनः प्रयोजनाच्च मुख्येनामुख्योर्थोलक्ष्यते
रोपितः शब्दव्यापारः सान्तरार्थनिष्ठोल
सिद्धये पराक्षेपः परार्थस्वसमर्पणं । उपा
[illegible] सा द्विधा ॥ [illegible]

शन्तियष्टयः प्रविशन्ति इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते तदुपादानेनेयं लक्षणा॥ गौरनुबन्ध्य इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते नतु शब्देनोच्यते विशेष्यं नाभिधागच्छेत् क्षीणशक्तिर्विशेषणे इति न्यायादित्युपादानलक्षणा तु नोदाहर्त्तव्या नह्यत्र प्रयोजनमस्ति नवा रूढिरियं व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते यथा क्रियतामित्यत्र कर्त्ता कुर्व्वित्यत्र कर्म्म प्रविश पिण्डमित्यादौ गृहं भक्षयेत्यादि च॥ पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं लक्ष्यते श्रुतार्थापत्तेरर्थापत्तेर्व्वा तस्य विषयत्वात्। गङ्गायां घोष इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति इत्येवमादौ लक्षणे नैषा लक्षणा उभयरूपा चेयं शुद्धा उपचारेणा मिश्रितत्वात्। अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यं तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजन संप्र

त्ययः । गङ्गासम्बन्धमात्रप्रतीतौ गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः कोभेदः ॥ सारोपान्यातु यत्रोक्तौ विषयी विषयस्तथा। आरोप्यमाण आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणासारोपा ॥ विषय्यन्तःकृतेऽन्यस्मिन् सास्यात्साध्यवसानिका । विषयिणारोप्यमाणेनान्तःकृते निगीर्णेऽन्यस्मिन्नारोपविषये सति साध्यवसाना ॥ भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा ॥ गौणौ शुद्धौ च विज्ञेयौ इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ। गौर्वाहीकइत्यत्र गौरयमित्यत्र च अत्र हि स्वार्थसहचारिणोगुणा जाड्यमान्द्यादयोलक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित् ॥ स्वार्थसहचारिगुणाभेदेन परार्थगतागुणा एव लक्ष्यन्ते नतु परार्थोऽभिधीयतइत्यन्ये। साधारणगुणाश्रयत्वेन परार्थएव लक्ष्यत इत्यपरे॥ उक्तञ्चान्यत्र॥ अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते। लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणतेति॥ अविनाभावोऽत्र

सम्बन्धमात्रं नतु नान्तरीयकत्वं ॥ तथात्वे हि मञ्चाः क्रोशन्तीत्यादौ न लक्षणा स्यात् अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणायानोपयोग इत्युक्तं॥ आयुर्घृतमायुरेवेदमित्यादौ च सादृश्यात् अन्यत् कार्य्यकारणभावादिसम्बन्धान्तरं ॥ एवमादौ च कार्य्यकारणभावादिलक्षणपूर्व्वमारोपाध्यवसाने॥ अत्र गौणभेदयोर्भेदेपि ताद्रूप्यप्रतीतिः॥ सर्व्वथैवा भेदावगमस्य प्रयोजनं॥ शुद्धभेदयोस्त्वन्यवैलक्षण्ये नाव्यभिचारेणच कार्य्यकारित्वादि। क्वचित्तादर्थ्या दुपचारः यथेन्द्रार्था स्थूणा इन्द्रः क्वचित् स्वस्वा मिभावात् यथा राजकीयः पुरुषोराजा क्वचि दवयवावयविभावात् यथाग्रहस्तइत्यत्राग्रमात्रे ऽवयवे हस्तः॥ क्वचित् तात्कर्म्यात् यथा अतक्षा तक्षा लक्षणा तेन षड्विधा॥ आद्यभेदाभ्यां सह सर्वे च व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने। प्रयो जनं हि व्यञ्जनव्यापारगम्यमेव ॥ तच्च गुढम गूढम्वा॥ तच्चेति व्यङ्ग्यं गूढं यथा॥

मुखं विकसितस्मितं वशितवङ्किमप्रेक्षितं समुच्छलितवि

भ्रमा गतिरपास्तसंस्तामतिः। उरोमुकुलितस्तनं जघनमंस वन्धोद्धुरं वतेन्दुवदना तनौ तरुणि मोद्गमोमोदते॥

अगूढं यथा॥

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानां। उपदिशति कामिनीनां यौवनमद एव ललितानि॥

अत्रोपदिशतीति अनायासेन शिक्षादानमभिधेयवत् स्फुटं प्रतीयते। तदेषा कथिता त्रिधा अव्यक्ता गूढव्यङ्ग्या अगूढव्यङ्ग्या च॥ तद्भूर्लाक्षणिकः शब्द इति सम्बध्यते तद्भूस्तदाश्रयः॥ तत्र व्यापारो व्यञ्जनात्मकः॥ कुत इत्याह यस्य प्रतीतिमाधातुं लक्षणासमुपास्यते॥ फले शब्दैकगम्ये त्र व्यञ्जना नापराक्रिया॥ प्रयोजन प्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतिपत्तिरपितु तस्मादेव शब्दात् नचार्थे व्यञ्जनादृतेऽन्यो व्यापारः॥ तथाहि नाभिधासमयाभावात्। गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्म्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः सङ्केतिताः॥ हेत्वभावान्न लक्षणा मुख्यार्थबाधादित्रयं हेतुः॥ तथाच लक्ष्यं न मुख्यं नाप्यत्र बाधायोगः फलेन नो॥

न प्रयोजनमेतस्मिन्न च शब्दः स्खलद्गतिः ॥ यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद्यदि तटेऽपि स बाधः स्यात् तत्प्रयोजनं लक्षयेत् न च तटं मुख्योऽर्थः नाप्यत्र बाधः न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः नापि प्रयोजने लक्ष्ये किञ्चित्प्रयोजनं नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुं समर्थः ॥ एवमप्यननवस्था स्याद्या मूलक्षतिकारिणी । एवमपीति । प्रयोजनञ्चेल्लक्ष्यते तत्प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृता प्रतीतिकृदनवस्था भवेत् ॥ ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतिपत्तिश्च प्रयोजनमिति विशिष्टे लक्षणा तत्किं व्यञ्जनेनेत्याह प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ कुत इत्याह ज्ञानस्य विषयो ह्यन्यः फलमन्य[illegible] । [illegible] प्रत्यक्षादेर्नीलादिर्विषयः फलन्तु प्रकटता सम्वित्तिर्वा ॥ विशिष्टे लक्षणा नैवं व्याख्यातं ॥ विशेषाः स्युस्तु लक्षिते ॥ तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्य्यलक्षणाभ्यो व्यापारान्तरेण गम्याः ।

तच्च व्यञ्जनध्वननादिशब्दवाच्यमवश्यमेषितव्यं एवं लक्षणामूलं व्यञ्जकत्वमुक्तं ॥ अभिधामूलन्त्वाह अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनं ॥ संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः । सामर्थ्यमौचिती देशः कालोव्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृति हेतवः॥ इत्युक्तदिशा॥

सशङ्खचक्रोहरिः अशङ्खचक्रोहरिरित्युच्यते । रामलक्ष्मणाविति दाशरथौ। रामार्ज्जुनगतिस्तयोरिति भार्गवकार्त्तवीर्य्ययोः। स्थाणुम्भज भवच्छिदइति हरे। सर्व्वं जानाति देव इति युष्मदर्थे । कुपितोमकरध्वज इति कामे। देवस्य पुरारातेरिति शम्भौ। मधुना मत्तःकोकिल इति वसन्ते । पातु वोदयितामुखमिति सांमुख्ये।भात्यत्र परमेश्वरइति राजधानीरूपात् देशाद्राजनि। चित्रभानुर्विभातीति दिने। रवौ र.नावह्नौ। मित्रम्भातीति सुहृदि। मित्रोभातीतिरवौ। इन्द्रशत्रुरित्यादौ वेदएवकाव्येन स्वरोविशेषप्रतीतिकृत् आदिग्रहणात् । एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं॥ एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअ एहिं॥

इत्यादावभिनयादयः। इत्थं संयोगादिभिरर्था न्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनन्तत्र नाभिधा नियमनात्तस्या न च लक्षणा मुख्यार्थबाधाद्यभावात् अपित्वञ्जनं व्यञ्जनमेव व्यापारः यथा॥

भद्रात्मनोदुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततंकरोऽभूत्॥

तद्युक्तोव्यञ्जकः शब्दः तद्युक्तोव्यञ्जनाव्यापरयुक्तः। यत्सोऽर्थान्तरयुक् तथा। अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः॥ तथेति व्यञ्जकः॥

इति श्रीकाव्यप्रकाशे शब्दनिर्णयोनाम द्वितीय उल्लासः॥०॥

अर्थाः प्रोक्ताः पुरा तेषां॥ अर्था वाच्यलक्ष्यव्यङ्ग्याः॥ तेषां वाचकलाक्षणिकव्यञ्जकानां अर्थे व्यञ्जकतोच्यते। कीदृशीत्याह। वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः। प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषां। योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा। बोद्धव्यः प्रतिपाद्यः। काकुर्ध्वनेर्वि

कारः। प्रस्तावः प्रकरणं अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः॥ क्रमेणोदाहरणं॥

अइ विउलं जलकुम्भं घेत्तूण समागदह्मि सहि तुरिअं।
समसेअसलिलणीसासणीसहा वीसमामीखणं॥

अत्र चौर्य्यरत गोपनं गम्यते॥

ओणिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअं। मह
मन्दभाइणीए केरं सहि तुह वि परिहवइ॥

अत्र दूत्यास्तत्कामुकोपभोगोव्यज्यते॥

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां वने व्याधैः
सार्द्धं सुचिरमुषितं वल्कलधरैः। विराटस्यावासे स्थितमनुचितारम्भनिभृतं गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते॥ नच वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यं प्रश्नमात्रेणापि काकोर्विश्रान्तेः॥

तइआ मह गण्डत्थलमिलिदं दिट्ठिं ण णेसि अस्सत्तो।
एह्लिं सच्चे अअह तोअ कवोला णसा दिट्ठी॥

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत् चलितायान्तु तस्यामन्यैव जाते त्यहो प्रच्छन्नकामुकत्वमिति व्यज्यते ॥

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्म्मदायाः । किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यं ॥

णोल्लेइ अणलसमणा अत्ता मं घरभरम्मिसअलम्मि । खण मेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥

अत्र सन्ध्यासङ्केतकालइति तटस्थं प्रति कयाचिद्द्योत्यते ॥

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण । एमेअकि त्ति चिट्ठसि ता सहि सज्जेसु करणिज्जं ॥

अत्रोपपतिं प्रत्यभिसर्तुंप्रस्तुतं न युक्तमिति कयाचिन्निवार्य्यते ॥

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः । नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्व्वः ॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाभिसार्य्यतामिति आश्वस्तां प्रति कयाचिन्निवेद्यते ॥

गुरु अण परवसपिअ किं भणामि तुह मन्दभाइणी क्खु अहं । अज्ज प्पवासं वच्चसि वच्च सअं ज्जेअ मुणसि करणिज्जं ॥

अत्राद्यमधुसमये यदि व्रजसि तदाहन्तावन्न भवामि तव तु न जानामि गतिमिति व्यज्यते ॥ आदिग्रहणाच्चेष्टादेः तत्र चेष्टाया यथा ॥

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्य्यसारश्रिया प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितं । आनीतं पुरतः शिरोंऽशुकमधःक्षिप्ते चले लोचने वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥

अत्र चेष्टया प्रच्छन्नकान्तविषयआकूतविशेषोध्वन्यते ॥ निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया पुनःपुनरुदाह्रियते वक्त्रादीनां मिथःसंयोगोद्विकादिभेदेन अनेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्य्यं । शब्दप्रमाणवेद्योऽर्थोव्यनक्त्यर्थान्तरं यतः । अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥ शब्देति नहि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ॥

इति श्रीकाव्यप्रकाशेऽर्थनिर्णयस्तृतीयउल्लासः॥०॥

यद्यपि शब्दार्थयोर्न्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं तथापि धर्म्मिणि प्रदर्शिते धर्म्माणांहेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह॥ अविवक्षितवाच्योयस्तत्र वाच्यं भवेद्ध्वनौ। अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतं॥ लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव अविवक्षितं वाच्यं यत्र सध्वनावित्यनुवादात् ध्वनिरिति ज्ञेयं तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितं यथा॥

त्वामस्मि वच्मि विदुषां समवायोत्र तिष्ठति। आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्॥

अत्र वचनाद्युपदेशादिरूपतया परिणमति। क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतं यथा॥

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवतापरं। विदधदीदृशमेव सदा सखे सुखितमास्स ततः शरदां शतं॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति॥ विवक्षितञ्चान्यपरं वाच्यं यत्रापरस्तु सः॥ अन्यपरं व्यङ्ग्यनिष्ठं एष च। कोप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः॥ अलक्ष्येति न खलु विभावा

नुभावव्यभिचारिण एव रसः अपितु रसस्तैरि
त्यस्ति क्रमः सतु लाघवान्न लक्ष्यते। तत्र। रसभाव
तदाभासभावशान्त्यादिरक्रमः। भिन्नोरसाद्यलङ्का
रादलङ्कार्य्यतया स्थितः॥ आदिग्रहणाद्भावोदय
भावसन्धिभावशवलत्वानि ॥ प्रधानतया यत्र स्थि
तोरसादिस्तत्रालङ्कार्य्यः यथोदाहरिष्यते। अन्यत्र
तु प्रधाने वाक्यार्थे यत्राङ्गभूतोरसादिस्तत्र गुणी
भूतव्यङ्ग्ये रसवत्प्रेय ऊर्ज्जस्विसमाहितादयोऽल
ङ्काराः॥ ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरि
ष्यन्ते॥ तत्र रसस्वरूपमाह॥ कारणान्यथकार्य्याणि
सहकारीणि यानि च। रत्यादेः स्थायिनो लोके
तानि चेन्नाट्यकाव्ययोः॥ विभावा अनुभावास्तु कथ्य
न्ते व्यभिचारिणः। व्यक्तः स तैर्विभावाद्यैः स्थायी
भावोरसः स्मृतः॥ उक्तं हि भरतेन। विभावानुभाव
व्यभिचारिसंयोगाद्रसनिष्पत्तिरिति॥ एतद्विवृणुते
विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः।
स्थायीरत्यादिकोभावोजनितः अनुभावैः कटाक्ष
भुजाक्षेपप्रभृतिभिः कार्य्यैः प्रतीतियोग्यःकृतः
व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो
मुख्यया वृत्त्या रामादावनुकार्य्ये तद्रूपतानुसन्धा

नाऽनर्त्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः ॥ राम एवायमयमेव राम इति न रामो यमित्युत्तरकालिके बाधे रामोऽयमिति रामः स्याद्वा नवायमिति रामसदृशोऽयमिति च सम्यङ्मिथ्या संशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे ॥

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः । मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरङ्गता ॥ दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च । अविरलविलोलजलदः कालः समुपागतश्चायं ॥

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्त्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथानभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद्गम्यगमकभावादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन सम्भाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्री शङ्कुकः ॥ न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते अपितु काव्ये नाट्ये चाभिधातो द्वितीयेन

विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसम्विद्विश्रान्तिसतत्त्वेन भोगेन भुज्यतइति भट्टनायकः। लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्येच तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्य्यैर्ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इतिसम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिकोनियतप्रमातृगतत्वेन स्थितोपि साधारणोपायबलात् तत्कालविगलितपरिमित प्रमातृभाववशोन्मिषित वेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसम्वादभाजा साधारण्येन स्वाकारइवाभिन्नोपि गोचरीकृतश्चर्व्यमाणतैकप्राणोविभावादिजीविताविधिः पानकरसन्यायेन चर्व्यमाणः पुरइव परिस्फुरन् हृदयमिव प्रविशन् सर्व्वाङ्गीनमिवालिङ्गन् अन्यत् सर्व्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको

रसः। सच न कार्य्यः विभावादिविनाशेपि तस्य सम्भवप्रसङ्गात्। नापि ज्ञाप्यः सिद्धस्य तस्याभावात् अपितु विभावादिभिर्व्यञ्जितश्चर्व्वणीयः कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत् न क्वचिद्दृष्टमित्यलौकिकसिद्धेर्भूषणमेतन्न दूषणं। चर्व्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्य्योप्युच्यतां लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यसंस्पर्शरहितस्वात्ममात्रपर्य्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचरइति प्रत्ययोऽप्यधीयतां। तद्ग्राहकञ्च न निर्व्विकल्पकं विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकं चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसम्वेदनसिद्धत्वात् उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्व्ववल्लोकोत्तरतामेव गमयति नतु विरोधमिति श्रीमदाचार्य्याभिनवगुप्तपादाः॥ व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणां। अश्रुपातादयोनुभावाः शृङ्गारस्येव करुणभयानकयोश्चिन्तादयोव्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्द्दिष्टाः॥

वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः। धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे॥ इत्यादौ॥ परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु। कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः॥ ॥इत्यादौ॥ दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतं। मानिन्याश्चरणानतिव्यतिकरे वास्पाम्बुपूर्णेक्षणं चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि। इत्यादौ॥

यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानाञ्च व्यभिचारिणां केवलानामत्र स्थितिस्तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति॥ तद्विशेषानाह ॥ शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥ तत्र शृङ्गारस्य द्वौ भेदौ सम्भोगो विप्रलम्भश्च॥ तत्राद्यं परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य एक एव गण्यते यथा॥

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्रा व्याजमुपागतस्य सुचिरंनिर्व्वर्ण्य पत्युर्मुखं। विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ तथा। त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिका संस्पृशि । शय्योपान्तनिविष्टसस्मितमुखीनेत्रोत्सवानन्दितोनिर्यातः शनकैरलीकवचनोपन्याससमालोजनः।

अपरस्त्वभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः क्रमेणोदाहरणं॥

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशोनिसर्गमधुराश्चेष्टा भवेयुर्मयि । यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रोलयः॥ अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृद्योमान्नेच्छति नागतस्य हहहा कोयं विधेः प्रक्रमः। इत्यल्पेतरकल्पनाकवलितस्वान्तानिशान्तान्तरे बालावृत्त विवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि॥ एषाविरहोत्कण्ठिता॥ सा पत्युः प्रथमापराधसमये सख्योपदेशं विना नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनं। स्वच्छैरच्छकपोलमूलगलितैःपर्य्यस्तनेत्रोत्पला बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥ प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं

गतं धृत्या मच्चपमासितं व्यवसितं चित्तेन गन्तुं पुरः। यातुं निश्चितचेतसि प्रियतमे सर्व्वे समं प्रस्थिता गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥ त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायामात्मानन्ते चरणपतितं यावदिच्छामि कर्त्तुं। अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥

## हास्यादीनां क्रमेणोदाहरणं ॥

आकुञ्च्य पाणिमशुचिं मम मूर्द्धि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे। तारस्वरं प्रहितथूत्कमदात्प्रहारं हाहा हतो हमिति रोदिति विष्णुशर्म्मा ॥ हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषो धिक्प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ। इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति शतधा कुर्व्वन्ति भित्तीरपि॥ कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः। नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशांबलिं॥ क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः। सौमित्रे तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ ग्रीवाभङ्गाभिरामं मुहुरनुप

त्तति स्यन्दने दत्तदृष्टिः पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूय सापूर्व्वकायं। शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्ण्ण वर्त्मा पश्योदग्रप्लुतत्वात् वियति वहुतरं स्तोकमुर्व्व्यां प्रयाति॥ उत्कृत्योत्कृत्य कृत्तिं प्रथममथपृथूत्सेधभूयांसि मांसान्यंसस्फि कपृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा। आर्त्तः पर्य्यस्त नेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थं स्थपु टगतमपि क्रव्यमव्यग्रमत्ति॥ चित्रं महानेष तवावतारः क्व कान्तिरेषाभिनवैवभङ्गिः। लोकोत्तरं धैर्य्यमहोप्रभावः काप्या कृतिर्नूतनएष सर्गः॥

एषां स्थायिभावानाह॥ रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा। जुगुप्सा विस्मयश्चैव स्थायि भावाः प्रकीर्त्तिताः। अथ व्यभिचारिणोब्रूते॥ निर्व्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः। आल स्यञ्चैव दैन्यञ्च चिन्तामोहः स्मृतिर्धृतिः। व्रीडा चप लताहर्ष आवेगोजडता तथा। गर्व्वोविषाद औत्सुक्यं निद्रापस्मार एव च। त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः। त्रयस्त्रिंशदमीभावाः समा ख्यातास्तु नामतः॥ निर्व्वेदस्यामङ्गलप्रायस्य प्रथ ममनुपादेयत्वेप्युपादानं व्यभिचारित्वेपि स्थायिता

भिधानार्थं ॥ तेन निर्वेदस्थायिभावोस्तिशान्तोपि नवमोरसः । यथा ॥

अहौ वा हारेवा कुसुमशयने वा दृशदि वा मणौ वा लोष्टेवा बलवति रिपौ वा सुहृदि वा । तृणे वा स्त्रैणे वा मम समदृशोयान्तु दिवसाः क्वदा पुण्येरण्ये शिव शिव शिवेति प्रलपतः ॥

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भाव प्रोक्तः ॥ आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया ॥ कान्ताविषया तु व्यक्ता शृङ्गारः । उदाहरणं ॥

कण्ठकोणविनिविष्टमीशते कालकूटमपि मे महामृतं । अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥ हरत्य घंसंप्रति हेतुरेष्यतः शुभस्य पूर्व्वाचरितैः कृतं शुभैः । शरीर भाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेपि योग्यतां ॥

पुत्रविषया रतिर्यथा ॥

एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्द्धनि चिरञ्च परिष्वजे त्वां । आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देथवा चरणपुष्करकद्वयन्ते ॥

एवमन्यदप्युदाहार्य्यं ॥ व्यभिचारी यथा ॥

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेद्य दृष्टा मया मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः । नो यावत्प

रिह्य चाटुकशतैराश्वासयामि प्रियां भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥

अत्र विधिं प्रत्यसूया । तदाभासा अनौचित्यप्रवर्त्तिताः । तदाभासा रसाभासाभावाभासाश्च । तत्र रसाभासोयथा ॥

स्तुमः कम्वामाक्षि क्षणमपि विना यं न रमसे विलेभे कः प्राणान् रणमुखमुखे यं मृगयसे । सुलग्ने कोजातः शशिमुखि यमालिङ्गसि बलात्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यं ॥

अत्रानेककामुकविषयमभिलाषं तस्यास्तुम इत्याद्यनुचितं बहुव्यापारोपादानं व्यनक्ति ॥

भावाभासोयथा ॥

राकासुधाकरमुखी तरलायताक्षी सस्मेरयौवनतरङ्गितविभ्रमास्या । तत् किं करोमि कथमत्र तनोमि मैत्रीं तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः ॥

अत्र चिन्ता अनौचित्यप्रवर्त्तिता एवमन्येप्युदाहार्य्याः ॥ भावस्य शान्तिरुदयः सन्धिः शवलता तथा । क्रमेणोदाहरणं ॥

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं किम्वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते । इत्युक्ते क तदित्युदीर्य्य

सहसा तत्संप्रमार्ष्टुं मया साश्लिष्टा रभसेन तत्सुखवशात्त त्व्यापि तद्विस्मृतं ॥ अत्र कोपस्य ॥ एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया सद्यःकोपपराङ्मुखं शयितया चाटूनि कुर्व्वन्नपि । आवेगादवधीरितः प्रियतमस्तूष्णींस्थितस्तत्क्षणात् मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ अत्रौत्सुक्यस्य ॥ उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः । वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥ अत्रावेगहर्षयोः ॥ क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोपि दृश्येत सा दोषाणां प्रशमाय मे श्रुतमहो कोपेपि कान्तं मुखं । किम्वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेपि सा दुर्लभा चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योधरं धास्यति ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां भावस्थितिस्तूक्ता चोदाहृता च ॥ मुख्ये रसेपि तेङ्गित्वं प्राप्नुवन्ति कदाचन ॥ ते भावशान्त्यादयः अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत् ॥ अनुस्वानाभसंलक्ष्य क्रमव्यङ्ग्यस्थितिस्तु यः । शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥ शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः ॥ अर्थशक्तिमूलानुरणन

रूपव्यङ्ग्यः। उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः॥ अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते॥ प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा॥ वस्त्वेवेति अनलङ्कारो वस्तुमात्रं। आद्यो यथा॥

उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्ज्जितगर्ज्जितेन। निर्व्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः॥

अत्र वाक्यस्यासम्बद्धत्वस्याभिधायकत्वं माप्रसाङ्क्षीदित्यत्र प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालङ्कारो व्यङ्ग्यः॥

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः। मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्व्विभाति भवान्॥

अत्रैकस्य पदस्य द्विपदत्वे विरोधाभासः॥

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो। अहितः सहितः साधुयशोभिरसतामसि॥

अत्रापि विरोधाभासः॥

निरुपादानसम्भारमभित्तावेव तन्वते। जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥

अत्र व्यतिरेकः अलङ्कार्य्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता॥ वस्तुमात्रं यथा॥

पथिअ ण एत्थ पत्थरमत्थि मणं पत्थरत्थले गामे। उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु॥

अत्र यद्युपभोगक्षमोसि तदास्वेति व्यज्यते॥

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वं। यस्मै प्रसीदसि पुनः स भात्युदारोनुदारश्च॥

अत्र विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते॥ अर्थशक्त्युद्भवोप्यर्थो व्यञ्जकः सम्भवी स्वतः। प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा। वस्तुवालङ्कृतिर्वेति षड्भेदोसौ व्यनक्ति यत्। वस्त्वलङ्कारमथ वा तेनायं द्वादशात्मकः। अर्थोद्विविधः स्वतःसम्भवी इदंप्रथमकल्पितश्च तत्र स्वतः सम्भवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन सम्भाव्यमानः कविनाप्रतिभामात्रेण वहिरसन्नपि निर्म्मितः। कविनिबद्धेन वा वक्त्रेति द्विविधोऽपर इति त्रिविधः॥ वस्तुवालङ्कारो वासाविति षोढा व्यञ्जकः॥ तस्य वस्तुवालङ्कारो वाव्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः। क्रमेणोदाहरणं॥

अलससिरोमणिधुत्ताणं अग्गिमोपुत्तिधणसमिद्धिमओ॥ इअभणिएणणअङ्गीपफुल्लविलोअणा जाआ॥

अत्र ममैवोपभोग्यइति वस्तुना वस्तु व्यज्यते॥

धन्यासि या कथयसि प्रियसङ्गमेपि विश्रब्धचाटुकशतानि रतान्तरेषु । नीवीं प्रतिप्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥

अत्र त्वमधन्या अहन्तुधन्येति व्यतिरेकालङ्कारः॥

दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तनिघ्नघनशोणितशोणशोचिः । वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्षइव यस्य करे कृपाणः ॥

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात्करिष्यतइति वस्तु॥

गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः। ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरं॥

अत्र विरोधालङ्कारेणाधरनिर्दंशनसमकालमेव शत्रवोव्यापादिता इति तुल्ययोगिता॥ मम क्षत्याप्यन्यस्य क्षतिर्निवर्त्ततामिति तद्बुद्धिरुत्प्रेक्ष्यते इत्युत्प्रेक्षा वा ॥ एषूदाहरणेषु स्वतःसम्भवी व्यञ्जकः॥

ङ

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां यदीयां । स्रस्तापाङ्गाः सरसबिसिनी काण्डसञ्जातशङ्कादिग्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति ॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्त्तिरिति वस्तु ध्वन्यते ॥

केसेसु बला मोडिअ तेण समरम्मि जअसिरीगहिआ । जह कन्दराहिं विहुरा तस्स दिढं कंठम्मि संठविआ ॥

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति इत्युत्प्रेक्षा एकत्र संग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः ॥ न पलाय्य गतास्तद्वैरिणोपि तु ततः पराभवं संभाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च ॥

गाढालिङ्गणरहसुज्जअम्मि दइए लहुं समोसरइ । माणंसिणीण माणो पीलणभीअ व्व हिअआहि ॥

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र जृम्भत इति ।

ओठेरंवहसन्तीकदूवअणंवुरुह्वद्धुविणिवेसा। दावेइभुअण अण्डलमखंविअजअइसावाणी॥

अत्रोत्प्रेक्षया चमत्कारैककारणं॥

नवंनवंजगदजडासनस्थानिर्मिमीतइति व्यतिरेकः॥

एषु कविप्रौढोक्तिमात्रनिष्पन्नः॥

जे लंकागिरिमेहलाहिं खलिदा सम्भोअखिष्णोरइफारो ष्फुल्लफणावलीकवलणे पत्तादरिद्दत्तणं। ते एह्रिंमलआनिलाविरहिणीणीसाससम्पक्किणो जादाझत्तसिसुत्तणे विवहला तारुस्सपुस्साविअ॥

अत्र निःश्वासैः प्राप्तैश्वर्य्यावायवः किंकिं न कुर्व्वन्तीति वस्तुना वस्तु व्यज्यते॥

सहिविविरह्कणमाणस्समतमंज्जंधीरकत्तणेण। आसासा न्मिअदंसणविह्लंखलणखणंम्मिसह सन्ति ते णओसरिअं॥

अत्र वस्तुनाऽक्षतेपि प्रार्थने प्रसन्नेति विभावना। प्रियदर्शनस्य सौभाग्यवलं धैर्य्येण सोढुं न शक्यते इत्युत्प्रेक्षावेति॥

उल्लोलकरअरलोअणखएहिंतुहअणेसुंमहदिषं। रत्तं सुअंपसाओ कोवेण पुणोइमे ण अक्कमिआ॥

अत्र किमिति लोचनेकुपिते वहसीत्युत्तरालंकारेण न केवलमार्द्रनखक्षतानि गोपयसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु॥

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।
अणुदिणमणण्णकम्मा अङ्गं तणुअम्पि तणुएइ ॥

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेपि तव हृदये न वर्त्तते इति विशेषोक्तिः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः॥ एवं द्वादश भेदाः॥ शब्दार्थोभयभूरेकः। यथा॥

अतंद्रचन्द्राभरणा समुद्दीपितमन्मथा। तारका तरला श्यामा सानन्दं न करोति कं॥

अत्रोपमा व्यङ्ग्या॥ भेदा अष्टादशास्य तत्॥ अस्येति ध्वनेः॥ ननु रसादीनां बहुत्वे कथमष्टादशेत्याह॥ रसादीनामनन्तत्वाद्भेद एको हि गण्यते॥ तथाहि। नव रसाः। तत्र शृङ्गारस्य द्वौ भेदौ। सम्भोगो विप्रलम्भश्च। सम्भोगस्यापि परस्परदर्शनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्य्यास्तमयचन्द्रोदयषड्तुवर्णनादयो बहवो भेदाः॥ विप्रलम्भस्याभिलाषादय उक्ताः। तयोरपि विभावानुभावव्यभिचारिवैचित्र्यं। तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वं॥ तत्रापि देशकालावस्थाभेदा इत्येकस्यैव रसस्यानन्त्यं का गणना त्वन्येषां। असंलक्ष्यक्रमत्वन्तु सामान्यमाश्रित्य रसादिध्वनि

भेदएकएव गण्यते। वाक्येद्व्युत्थः। द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः पदेप्यन्ये। अपि शब्दादा क्येपि। एकावयवस्थितेन भूषणेन कामिनीव पद द्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्या भारतीभासते। तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि॥

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा। अनुकम्प्यो ऽनुकम्प्यश्च स जातः स च जीवति॥

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनियन्त्र णत्वस्नेहपात्रत्वादिसंक्रमितवाच्याः॥

खलववहारा दीसन्ति दारुणाजहवितहविधीराणं। हिअ अवअस्स बऊस आएऊववसाआविमुह्यन्ति॥

अत्र विमुह्यन्तीति॥

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः। तदा सुधास्पद मभूदधुनातु ज्वरोपमं॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रका श्यन्ते। यथावा॥

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व धृतिंबधान ऋजुतां दूरे कुरु प्रेयसि। सख्यैवं प्रतिबो धिता प्रतिवचस्तामाह भीतानना नीचैः शंसहृदिस्थितोहि नन मे प्राणेश्वरः श्रोष्यति॥

अत्र भीताननेति। एतेन हि नीचैः शंसनविधानस्य युक्तता गम्यते भावादीनां पदप्रकाश्यत्वे धिकं न वैचित्र्यमिति न तदुदाह्रियते॥

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः। झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः॥

अत्र भीषणीयस्य भीमसेन उपमानं॥

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः। कस्य नानन्दनिस्यन्दं विदधाति सदागमः॥

काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसति।

सायं स्नानमुपासितं मलयजेनाङ्गं समालम्भितं यातोऽस्तं चलमौलिमम्बरमणिर्विस्रब्धमन्दा गतिः। आश्चर्यं तव सौकुमार्य्यमभितः क्लान्तासि येनाधुना नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुं॥

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्तासीति वस्त्वधुनापदद्योत्यं व्यज्यते॥

तदप्राप्तिमहादुःखविलीनाशेषपातका। तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥ चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणं। निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका॥

अत्र जन्मसहस्रैरुपभोक्तव्यानि सुकृतदुष्कृतफलानि वियोगदुःखचिन्ताह्लादाभ्यामनुभूतानी

त्युक्तं। एवञ्च अशेषचयपदद्योत्येऽतिशयोक्ती॥

चण्डालावचण्डावनमवनं व्यसनमव्यसनं। बत वीरतव द्विषतां पराङ्मुखेत्वयि पराङ्मुखं सर्व्वं॥

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्त्ततइति सर्व्वपदद्योत्यं वस्तु॥

तुहवल्लहस्सगोसम्मिआसि अहरोमिलाणकमलदलो। इअ णव वहुआसोऊणकुणइवअणंमही ससुहं॥

अत्र रूपकेण त्वयास्य मुहुर्म्मुहुः परिचुम्बनं कृतं येन म्लानत्वमिति म्लानादिपदद्योत्यं काव्य लिङ्गं। एषु स्वतःसम्भवो व्यञ्जकः॥

राईसुचन्दधवलासुललिअमाफ्फालिऊणजोचावं। एकछत्तं विअकुणइभुवणरज्जं विअम्भन्तो॥

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्योन कश्चिदपि तदाज्ञावशपराङ्मुख इति॥

जायद्भिरुपभोगपरैरेतैर्निशातिवाह्यते॥

इतिभुवनराज्यपदद्योत्यं वस्तु प्रकाश्यते॥

निशितशरधियाऽर्पयत्यनङ्गोदृशि सुदृशः स्वबलं वयस्यराले। दिशि निपतति यत्र साच तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः॥

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि भवन्तीति व्यतिकरपदद्योत्यो विरोधः ॥

वारिज्जन्तो विउणो संदावकअत्थिएण हिअ। एण थणहरव-अस्सएण विसुद्धजाइ ण चलइ से हारो ॥

अत्र विशुद्धजातित्वलक्षणहेत्वलंकारेण हारोऽनवरतं कम्पमान एवास्ते इति न चलतीति पदव्यङ्ग्यं वस्तु ॥

सो मुद्धसामलंगो धम्मिल्लो कलिअ ललिअणिअदेहो । ताए खन्धाहि बलं हिअ सरो सुरअसंगरे जअइ ॥

अत्र रूपकेण मुहुराकर्षणे तथा केशपाशः स्कन्धयोः प्राप्तो यथा रतिविरता वप्यनिवृत्ताभिलाषः कामुकोऽभूदिति स्कन्धपदद्योत्या विभावना। एष कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ॥

णवपुण्णिमामिअङ्कस्स सुहअ को तं सि भण सु महसच्चं। का सोहग्गसमग्गा पओसरअणि व्व तुह अज्ज ॥

अत्र वस्तुनामयीवास्यामपि प्रथममनुरक्तत्वं न ततऽइति न वेत्यादि पओसेत्यादिपदद्योत्यं वस्तुव्यज्यते ॥

महिलावणिऊवणसमरम्मि अंकवालीएसहीएणिविडाए। हारो णिवारिओ विअ उच्चरअन्तो तदो कहं रमिअं ॥

अत्र वस्तुना द्वारच्छेदादनन्तरमन्यदेवरतम वश्यमभूत्तत्कथय कीदृगिति व्यतिरेकः कथं पदगम्यः ॥

पविसन्तीघरवारं विवलिअवअणा विलोइऊणपहं। खन्धे घेत्तूणघडं हा हा णट्ठोत्ति रुअसि सहि किंत्ति ॥

अत्र हेलच्छकारेण संकेतस्थानं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुं इच्छसि तदपरं घटं गृहीत्वा गच्छेति वस्तु किंत्तिपदव्यंग्यं। यथा ॥

विहलंखलंतुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिं वारप्फं समिसेण अप्पागुरुओत्ति पाडिअविभिखो ॥

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्त गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगम नाय द्वारघातव्याजेन बुद्धिपूर्वं व्याकुलया त्वया घटः स्फोटित इति मया चिन्तितं तत्किमिति नाश्व सिषि तत्समीहितसिद्धये व्रज अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनत्वपकृत्या वस्तु ॥

जोह्लाइ मऊरखेण अविहूणतारुण उत्सुअ मणा सा। वुड्ढाविणवोढव्वपरवंक्क अहहहरद्द तुहहिअअं ॥

च

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवधूपदप्रकाश्यः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः । वाक्यप्रकाश्येतु पूर्व्वमुदाहृतं ॥ शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्योन भवतीति पञ्चत्रिंशद्भेदाः ॥ प्रबन्धेप्यर्थशक्तिभूः ॥ यथा गृध्रगोमायुसंवादादौ ॥ तथाच ॥

अलं स्थित्वा श्मशानेस्मिन् गृध्रगोमायुसंकुले। कंकालबहुले घोरे सर्व्वप्राणिभयङ्करे। नचेह जीवितः कश्चित् कालधर्म्ममुपागतः। प्रियोवा यदिवा द्वेष्यः प्राणिनां गतिरीदृशी ॥ इति दिवाप्रभवतोगृध्रस्य पुरुषविसर्जनपरमिदं वचनं ॥ आदित्योऽयं स्थितोमूढाः स्नेहं कुरुत सांप्रतं। बहुविघ्नोमुहूर्त्तोयं जीवेदपि कदाचन। अमुं कनकवर्णाभं बालमप्राप्तयौवनं। गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः।

इति निशिविजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठञ्चेति प्रबन्ध एव प्रथते। अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः स्वयंन्तु लक्षणतोनुसर्त्तव्याः अपि शब्दात्पदवाक्ययोः पदैकदेशरचनावर्णेष्वपि रसादयः तत्र प्रकृत्या यथा ॥

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स।
रुद्दस्सतइअणअणंपव्वईपरिचुम्बिअञ्जअइ॥

अत्र जयतीति नतु शोभत इत्यादि समानेपि हि स्थगनव्यापारे लोकोत्तरेणैव रूपेणास्य पिधान मिति तदेवोत्कृष्टं तथा॥

प्रेयान्सोयमपाकृतःसशपथं पादानतः कान्तया द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः। तावत्प्रत्युतपाणिसंपुटलसन्नीवीनिबन्धं धृतोधाविलैव कृतप्रणामकमहो प्रेम्णो विचित्रागतिः॥

अत्र पदानीति नतु द्वाराणीति तिङ्सुपो र्यथा॥

पथि पथिशुकचञ्चूचारुशोभाङ्कुराणां दिशिदिशि पवमानोवीरुधांलासकश्च। नरिनरि किरतिद्राक्सायकान्पुष्पधन्वा पुरिपुरि विनिवृत्ता मानिनीमानचर्चा॥

अत्र किरतीति किरणस्य साध्यमानत्वं निवृत्तेति निवर्त्तनस्यसिद्धत्वं तिङासुपाच तत्रापिक्त प्रत्ययेनातीतत्वं द्योत्यते यथा वा॥

लिखन्नास्तेभूमिं वहिरवनतः प्राणदयितोनिराहाराः सख्यः सततरुदितोच्छूननयनाः। परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेयं विसृज कठिने मानमधुना॥

अत्र न लिखतीत्यपि तु प्रसादपर्य्यन्तमास्त इति तथा आस्तइति नतु आसितइति भूमिमिति नतु भूमाविति नहि बुद्धिपूर्व्वकं किञ्चिल्लिखती तिङ्सु व्विभक्तीनां व्यङ्ग्यं॥ सम्बन्धस्य यथा॥

गामारुहम्मि गामे वसामि ण अरट्ठिदूं ण आणामि। णाअरिआणं पइणोहरेमि जाहोमि साहोमि॥

अत्र नागरिकाणामिति षष्ठ्याः॥

रमणीयःक्षत्रियकुमारआसीदिति कालस्य॥

एषाहि भगमहेश्वरकार्मकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः॥ वचनस्य यथा॥

ताणंगुणगहणाणं ताणमुक्कंठाणं तस्सपेमस्सताणं भो आणं सुन्दरएरिसअं जाअमवसाणं॥

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते॥ पुरुषव्यत्ययस्य यथा॥

रेरे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिरप्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि किंमन्ये विहरिष्यसे वत हतांमुञ्चान्तराशामिमामेषा कण्ठतटे कृता खलुशिलासंसार वारां निधौ॥

अत्र प्रहासः॥ पूर्वनिपातस्य यथा॥

येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि प्रायः केवल नीतिरीतिशरणैः कार्य्यं किमुर्व्वीश्वरैः। ये क्ष्माशक्र पुनःपराक्रमनयस्वीकारकान्तक्रमास्तेस्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परं॥

अत्र पराक्रमस्य प्राधान्यं गम्यते विभक्तिविशेषस्य यथा॥

प्रधनाध्वनिधीरधनुर्ध्वनिभृतिविधुरैरयोधि तव दिवसं। दिवसेन तु नरपभवानयुद्धविधिसिद्धसाधुवादपदं॥

अत्र दिवसेनेत्यपवर्गे तृतीयाफलप्राप्तिं द्योतयति॥

भूयोभूयः सविधनगरीरथ्यया पर्य्यटन्तं दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था। साक्षात्कामं नवमिव रतिर्मालती माधवं यत् गाढोत्कण्ठाललितललितैरङ्गकैस्ताम्यतीति॥

अत्र अनुकम्पावृत्तेः कप्रत्ययतद्धितस्य॥

परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्। विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोप्यन्तर्जडयति च तापञ्च कुरुते॥

अत्र प्रशब्दस्योपसर्गस्य॥

इतश्च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहतास्स नो

द्विषः । तमांसि तिष्ठन्ति हि तावदंशुमान्नयावदायात्युदया ङ्गिमौलितां ॥

अत्र तुल्ययोगिताद्योतकस्य च इति निपातस्य ॥

रामोसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परामस्मद्भाग्य विपर्ययाद्यदिपरं देवोन जानाति तं । वन्दीवैष यशांसि गायति मरुद्यस्यैकवाणाहतिश्रेणीभूतविशालतालविवरोद्गी र्णैःस्वरैःसप्तभि ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्व्वनाम वचनप्रातिपदिकवचनानां नत्वहिति न मदिति अपि त्वस्मदित्यस्य सर्वाक्षेपिणः । भाग्यविपर्य्यया दिति । अन्यथा सम्पत्तिमुखेन नत्वभावमुखेना भिधानस्य ॥

तरुणिमनिकषयतिकलामनुमदनधनुर्भ्रुवोः पठत्यग्रे। अधिवसति सकललनामौलिरियं चकितहरिणचलनयना॥

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरू पस्यतरुणत्वइति धनुषः समीपइति मौलौवसती त्यत्र त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित्स्व रूपस्य विशेषोयश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति॥ एवमन्येषामपि बोद्धव्यं ॥ वर्णरचनानां

व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते॥ अपिशब्दात्प्रबन्धेषु नाटकादिषु॥ एवं रसादीनां पूर्व्वगणितभेदाभ्यां सह षड्भेदाः॥ भेदास्तदेकपञ्चाशत् व्याख्याताः तेषां चान्योन्ययोजनं सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया। नकेवलं शुद्धा एवैकपञ्चाशद्भेदाभवन्ति यावत्तेषां स्वप्रभेदैरेकपञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन त्रिविधेन सङ्करेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्गुणने वेदखाब्धि वियच्चन्द्राः शुद्धभेदैः सह शरेषु युगखेन्दवः॥ तत्र दिङ्मात्रमुदाह्रियते॥

खणपाऊणिआदेअरजाआएसुहअकिंपिदेभणिआ। रुअइपडोहरवलहीघरम्मिअणुणिज्जउवराई॥

अत्रानुनयः किमुपभोगलक्षणेर्थान्तरे संक्रमितः किमनुरणनन्यायेनोपभोगएव व्यङ्ग्ये व्यञ्जकइति संदेहः॥

स्निग्धश्यामलकान्तिलिप्तवियतोवेल्लद्बलाकाघना वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः। कामंसन्तु दृढं कठोर हृदयोरामोस्मि सर्वंसहे वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥

अत्र खिन्नेति पयोदसुहृदामिति चात्यन्ततिरस्कृत वाच्ययोः संसृष्टिः। ताभ्यां सह रामोस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः। एवमन्यदप्युदाहार्य्यं॥ इति काव्यप्रकाशे ध्वनिनिर्णयोनाम चतुर्थ उल्लासः॥

---

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह॥

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटं। सन्दिग्ध तुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरं। व्यङ्ग्यमेवं गुणीभूतव्यंग्यस्याष्टौ भिदाः स्मृताः॥ कामिनीकुचकलशवत् गूढं चमत्करोत्यगूढन्तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव॥ अगूढं यथा॥

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्तसूचिव्यधव्यतिकरेण युनक्ति कर्णौ। काञ्चीगुणग्रथनभाजनमेषसोस्मि जीवन्न संप्रति भवामिकिमावहामि॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य॥

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा गायन्तिमञ्जुमधुपा गृहदीर्घिकासु। एतच्चकास्ति च रवेर्नवबन्धुजीवपुष्पच्छदाभमुदयाचलचुम्बिबिम्बं॥

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य॥

अत्रासीत्फणिपाशबन्धनविधिः शक्त्या तु ते देवरे गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः। दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी॥

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य तस्याप्यत्रेति युक्तः पाठः॥ अपरस्य रसादेर्वाच्यस्य वाक्यार्थीभूतस्याङ्गं रसादि अनुरणनरूपं वा॥

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

अत्र शृङ्गारः करुणस्य॥

कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायतां। स्पर्द्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते॥

अत्र भावस्य रसः॥

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः। आश्चर्येण मुहुर्मुहुःस्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव.भुजावाचस्ततोमुद्रिताः॥

क

अत्र भूविषयोरत्याख्योभावोराजविषयस्य रति भावस्य॥

वन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्तिपरितश्चुम्बन्ति ते सैनिकाः। अस्माकं सुकृतै र्दृशोर्निपतितो । स्यौचित्यवारांनिधेर्विध्वस्ताविपदोखिलास्तदिति तैः प्रत्यर्थिभिःस्तूयसे॥

अत्र भावस्य रसाभासभावाभासौ प्रथमद्विती यावङ्गभूतौ॥

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः। ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात्॥

अत्र भावस्य भावप्रशमः॥

साकं कुरङ्गकदृशा मधुपानलीलां कर्त्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते। अन्याभिधायि तवनाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थां॥

अत्र त्रासोदयः॥

असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः। प्रमोदं वोदिश्यात्कपटवटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः॥

अत्रावेगधैर्य्ययोः सन्धिः॥

पश्चात्कश्चिच्चलचपलरे कालराहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि। इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः कन्या कञ्चित्फलकिसलयान्याददानाभिधत्ते॥

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता॥ एते च रसवदाद्यलङ्काराः यद्यपि भावोदयभावसन्धिभावशबलत्वानि नालङ्कारतयोक्तानि तथापि कश्चिद्ब्रूयादित्येवमुक्तं यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद्व्यवहारः॥



जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितं। कृता लङ्काभर्त्तुर्वदनपरिपाटीषु घटना मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥

अत्र शब्दशक्तिमूलोऽनुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः॥

आगत्य संप्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः। एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः॥

अत्र नायकवृत्तान्तोऽध्यारोपणेनैव स्थितः॥ वाच्यसिध्यङ्गं यथा॥

भ्रमिमरतिमलसहृदयतां प्रलयंमूर्छांतमःशरीरसादं। मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनां॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत्॥ यथावा॥

गच्छाम्यच्युतदर्शनेन भवतः किं तृप्तिरुत्पद्यते किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा। इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसामाश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥

अत्र अच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादि वाच्यस्य। एतच्चैकत्र एकवक्तृगतत्वेन अपरत्र भिन्न वक्तृगतत्वेनेत्यनयोर्भेदः॥ अस्फुटं यथा॥

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता। नादृष्टेन न दृष्टेन भवता लभ्यते सुखं॥

अत्रादृष्टोयथा न भवसि वियोगभयञ्च यथा नोत्पद्यते तथाकुर्य्या इति श्लिष्टं। सन्दिग्धप्राधान्यं यथा॥

हरस्तु किञ्चित्परिवृत्तधैर्य्यश्चन्द्रोदयारम्भइवाम्बुराशिः। उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं विलोचनव्यापारणं वा वाच्यं प्रधानमिति सन्देहः। तुल्यप्राधान्यं यथा ॥

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये। जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥

अत्र जामदग्न्यः सर्व्वेषां क्षत्रियाणामिव रक्षसां क्षणात्क्षयं करिष्यतीति व्यङ्गस्य वाच्यस्य च दुर्मनस्त्वस्य समं प्राधान्यं ॥ काक्वाक्षिप्तं यथा ॥

मथ्नामि कौरवशतं समरे न कोपाद्दुःशासनस्य रुधिरं न पिबाम्युरस्तः। संचूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितं ॥ असुन्दरं यथा ॥

वाणीरकुडंगुड्डीणसउणि कोलाहलं सुणन्तीए। घरकम्मवावडाए वहूएसीअन्ति अङ्गाइं ॥

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्टइति ॥ व्यङ्ग्यात्सीदन्त्यङ्गानीति वाच्यंसचमत्कारं ॥ एषां भेदा यथायोगं वेदितव्याश्च पूर्व्ववत् ॥ यथायोगमिति व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा। ध्रुवं ध्वन्यङ्गतातासां काव्यवृत्तेस्तदाश्रयात् ॥ इति

ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारोव्य ज्यते न तत्र गुणीभूतव्यङ्ग्यत्वं ॥ सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः। सालंकारैरिति तैरेवालङ्कारैः अलङ्कारयुक्तैश्च तैः तदुक्तं ध्वनिकृता ॥ सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ॥ सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधेति ॥ अन्योन्ययोगादेवं स्यात् भेदसङ्ख्यातिभूयसी ॥ एवमनेनप्रकारेण अवान्तरभेदगणने अतिप्रभूततरा गणना॥ तथाहि ॥ शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यं का गणना तु सर्व्वेषां सङ्कलनेन । पुनरस्य ध्वनेस्त्रयोभेदाः व्यङ्ग्यस्य त्रिरूपत्वात् ॥ तथाहि॥ किञ्चिद्वाच्यतां सहते किञ्चित्त्वन्यथा ॥ तत्र वाच्यता सहमविचित्रं विचित्रं चेति॥ अविचित्रं वस्तुमात्रं विचित्रं त्वलङ्कारयुक्तं ॥ यद्यपि प्राधान्येन तदलङ्कार्य्यं तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते॥ रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः॥ सहि रसादिशब्देन शृङ्गारादि शब्देन बाऽभिधीयेत। नचाभिधीयते तत्प्रयोगेपि विभावाद्यप्रयोगे तस्या प्रतिपत्तेस्तदप्रयोगेपि विभावादिप्रयोगेप्रतिपत्तेश्चे त्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रती

यतदिति निश्चीयते तेनासौ व्यङ्ग्य एव ॥ मुख्यार्थ बाधाद्यभावान्न पुनर्लक्षणीयः ॥ अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपव्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितं शब्दशक्तिमूले तु अभिधायानियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वं। अर्थशक्तिमूलेपि विशेषे संकेतः कर्त्तुं न युज्यत इति। सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यता वशात्परस्परसंसर्गो यत्रापदार्थोपि विशेषरूपोवाक्यार्थस्तत्राभिहितान्वय वादे काबार्त्ता व्यङ्ग्यस्याभिधेयतायां येप्याहुः। शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति। श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥१॥ अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकां। अर्थापत्त्यावबुध्यन्ते सम्बन्धन्त्रिप्रमाणकमिति प्रतिपादितदिशा देवदत्तगामानय इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरंसास्नादिमन्तमर्थं मध्यमवृद्धे नयति सत्यनेनास्माद्वाक्यादेवंविधोर्थः प्रतिपन्न इति तच्चेष्टयानुमायतयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्य

वाचकभावलक्षणसम्बन्धमवधार्य्य बालस्तत्र व्युत्प द्यते ॥ परतश्चैत्र गामानयदेवदत्ताश्वमानय देव दत्त गां नयेत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्ति निवृत्तिकारिवाक्यमेव प्रयोगयोग्यमिति वाक्य स्थितानामेव पदानां अन्वितैः पदार्थैः अन्वितानां मेव संकेतोगृह्यते इति विशिष्टा एव पदार्था वाक्यार्थोनतुपदार्थानां वैशिष्ठ्यं ॥ यद्यपि वाक्या न्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवै तानि पदानीति निश्चीयन्तइति पदार्थान्तरमात्रे णान्वितः पदार्थः संकेतगोचरस्तथापि सामान्या वच्छादितोविशेषरूपोऽसौ प्रतिपद्यते व्यतिष क्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधा नवादिनः ॥ तेषामपि मते सामान्यविशेष रूपः पदार्थः संकेतविषयइत्यतिविशेषभूतोवाक्या र्थान्तरगतोसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते॥ तत्रदूरे अर्थान्तरभूतस्य निःशेषच्युते त्यादौ विध्यादेश्चर्चा। अनन्वितोर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने। अन्वित

विशिष्टस्त्ववाच्य एवेत्युभयनयेऽप्यपदार्थएववाक्यार्थः॥ यदप्युच्यते। नैमित्तिकार्थानुसारेण निमित्तानिकल्प्यन्तइति तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा शब्दस्य प्रकाशकत्वान्न कारकत्वं। ज्ञापकत्वन्तु अज्ञातस्य कथं। ज्ञातत्वं च सङ्केतेनैव सचान्वितमात्रे एवञ्च निमित्तस्य नियतत्वं यावन्न निश्चितं तावन्नैमित्तिकस्यप्रतीतिरेव कथमिति नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त इति अविचारिताभिधानं येऽत्वभिदधति सोयमिषोरिव दीर्घदीर्घतरोव्यापार इति यत्परः शब्दः स शब्दार्थ इति च विधिरेवात्र वाच्यइति तेऽप्यतात्पर्य्यज्ञास्तात्पर्य्यवाचोयुक्तेर्देवानां प्रियाः॥ तथाहि॥ भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्त्तकस्वक्रियाभिसम्बन्धात्साध्यायमानतां प्राप्नुवन्ति। ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते यथा ऋत्विक् प्रचरणे प्रमाणान्तरात्सिद्धे लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र लोहितोष्णीषत्वमात्रं विधेयं हवनस्यान्यतः सिद्धे

दध्ना जुहोतीत्यादौ दध्यादेःकरणत्वमात्रं विधेयं क्वचिदुभयविधिः क्वचित्त्रिविधिरपि यथा रक्तं पटं वयेत्यादौ एकविधिर्द्विविधिस्त्रिविधिर्वा ॥ ततश्च यदेव विधेयन्तत्रैव तात्पर्य्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्य्यं नतु प्रतीतमात्रे एवं हि पूर्व्वोधावतीत्यादौ अपरार्थेपिक्वचित्तात्पर्य्यं स्यात्॥ यत्तु विषं भक्षय माचास्य गृहेभुङ्क्था इत्यत्र एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्य्यमिति सएववाक्यार्थइत्युच्यते। तत्र चकार एववाक्यतासूचनार्थः। नचाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्व्वथामास्यगृहे भुङ्क्था इतिउपात्तशब्दार्थे एव तात्पर्य्यं॥ यदिच शब्दश्रुतेरनन्तरं यावानर्थोलभ्यते तावति शब्दस्याभिधैव व्यापार स्ततः कथं ब्राह्मण पुत्रस्ते जातोब्राह्मण कन्यका ते गर्भिणीत्यादौ हर्षशोकादीनामपि न वाच्यत्वं ॥ कस्माच्च लक्षणा लक्षणीयेप्यर्थेदीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः किमितिच श्रुतिलिङ्गवाक्यप्रकरणस्थानसमा

ख्यानां पूर्व्वपूर्व्वबलीयस्त्वमित्यन्विताभिधानवादेपि विधेरपि सिद्धं व्यङ्ग्यत्वं ॥ किञ्च ॥ कुरु रुचिमिति पदयोर्वैपरीत्ये काव्यान्तर्व्वर्त्तिनि कथं दुष्टत्वं। नह्यत्रासभ्योर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवेत्येवमादि चापरित्याज्यंस्यात् । यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनांनित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नंस्यात् न चानुपपन्नं सर्व्वस्यैव विभक्ततया प्रतिभासात्॥ वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयेण तु व्यङ्ग्यस्य बहुविधत्वात्क्वचिदेव कस्यचिदेवौचित्येनोपपद्यतएव विभागव्यवस्था॥

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः॥

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वं ॥ अपिच ॥ वाच्योर्थः सर्व्वान्प्रतिपत्तॄन् प्रत्येकरूप एवेति नियतोसौ ॥ नहि गतोस्तमर्कइत्यादौ वाच्योर्थः

क्वचिदन्यथा भवति प्रतीयमानस्तु तत्तत्प्रकरण वक्तृप्रतिपन्नादिविशेषसहायतया नानात्वं भजते तथाच ॥

गतोऽस्तमर्कइत्यतः सपत्नप्रत्यवस्कन्ददानावसरइति ॥ अभिसरणमुपक्रम्यतामिति ॥ प्राप्तप्रायस्ते प्रेयानिति । कर्मक रणान्निवर्त्तामह इति ॥ सान्ध्योविधिरुपक्रम्यतामिति ॥ दूरं मागा इति सुरभयोगृहं प्रवेश्यन्तामिति ॥ सन्तापोऽधुना न भवतीति ॥ विक्रेयवस्तूनि संह्रियन्तामिति ॥ नागतोद्यप्रेया नित्यादिः ॥

अनवधिर्व्यङ्ग्योर्थस्तत्र तत्र भाति वाच्यव्यङ्ग्ययोर्निःशेषेत्यादौ निषेधविध्यात्मना ॥

मात्सर्य्यमुत्सार्य्य विचार्य्यकार्य्यमार्य्याः समर्य्यादमुदाहरन्तु । सेव्यानितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनां ॥

इत्यादौ संशये शान्तशृङ्गार्य्यन्यतरगतनिश्चय रूपेण ॥

कथमवनिपदर्पन्निशातासिधारादलनगलितमूर्ध्नाविद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किन्न नीताचिदिवमपगताङ्गैर्वल्लभा कीर्त्तिरेभिः ॥

इत्यादौ निन्दास्तुतिवपुषः स्वरूपस्य पूर्व्वपश्चाद्भावेन प्रतीतेः कालस्य शब्दाश्रयत्वेन शब्द तदेकदेश तदर्थवर्णसंघटनाश्रयत्वेनचाश्रयस्य शब्दानुशासनज्ञानेन प्रकरणादिसहाय प्रतिभानैर्मल्यसहितेन तेनचावगम इति निमित्तस्य। बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात् कार्य्यस्य गतोस्तमर्कइत्यादौ प्रदर्शित नयेन संख्यायाः॥

कस्सवणहोइरोसोदट्ठूणपिआएसव्वणं अहरं। सभमरपउमग्घाइणि वारिअवामे सहसुएण्हिं॥

इत्यादौ सखी तत्कान्तादिगतत्वेन विषयस्य च भेदेपि यद्येकत्वं तत्क्वचिदपि नीलानीलादौ भेदोन स्यात्। उक्तं हि। अयमेवहि भेदोभेदहेतुर्वा यद्विरुद्धधर्म्माध्यासः कारणभेदश्चेति वाचकानामर्थापेक्षा व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वं॥ किञ्च वाणीरकुडङ्गेत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्गेतात्पर्य्यभूतोप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामिति॥ ननु रामोस्मिसर्व्वं

सचद्गति रामेण प्रियजीवितेन तुकृतं प्रेम्णः प्रिये
नोचितमिति.रामोसौ भुवनेषु विक्रमगुणैः प्राप्तः
प्रसिद्धिंपरामित्यादौ लक्षणीयोप्यर्थोनानात्वं भजते
विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दार्था
यत्तः प्रकरणादिसव्यपेक्षश्चेति कोयं नूतनः प्रतीय
मानोनाम ॥ उच्यते ॥ लक्षणीयस्यार्थस्य नानात्वे
प्यनेकार्थशब्दाभिधेयवन्नियतत्वमेव न खलु मुख्ये
नार्थेनानियतसम्बन्धोलक्षयितुं शक्यते ॥ प्रतीय
मानस्तु प्रकरणादिविशेषवशेन नियतसम्बन्धः
अनियतसम्बन्धः सम्बद्धसम्बन्धश्च द्योत्यते नच ॥

अत्ता एत्थणिमज्जइ एत्थअहंदिअसअं पुलोएसु । माप
हिअरत्तिअधअसेज्जाएमहणुमज्जिहिसीत्यादौ ॥

विवक्षितान्यपरवाच्येध्वनौ मुख्यार्थबाधस्तत्कथ
मत्र लक्षणा । लक्षणायामपि व्यञ्जनमवश्यमाश्र
यितव्यमिति प्रतिपादितं ॥ यथाच समयसव्यपेक्षा
भिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्य
पेक्षा लक्षणा ॥ अतएवाभिधापुच्छभूता सेत्याहुः ॥
लक्षणात्मकमेव ध्वननं । तदनुगमेन तस्य दर्शनात् ।
नच तदनुगतमेव ॥ अभिधानावलम्बनेनापि

तस्य भावान्नचोभयानुसार्य्येव ॥ अवाचकवर्णा नुसारेणापि तस्य दृष्टेः नच शब्दानुसार्य्येव अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापितस्य प्रसिद्धेरित्यभिधानात्पर्य्यलक्षणात्मकव्यापारत्रया तिवर्त्ती ध्वननादिपर्य्यायोव्यापारोऽनपह्नवनीय एव॥ तत्राताएत्येत्यादौ नियतसम्बन्धः ॥ कस्य वणहोइरोसोइत्यादौ अनियत सम्बन्धः ॥

विपरीअरएलच्छी वह्मणहूणाहि कमलट्ठं। हरिणो दाहिणणअणं रसाउलाझत्ति ढक्केइ ॥

इत्यादौ सम्बद्ध सम्बन्धः अत्र हि हरिपदेन दक्षिण नयनस्य सूर्य्यात्मकता व्यज्यते तन्निमील नेन सूर्य्यास्तमयस्तेन पद्मस्य संकोचस्ततोब्रह्मणःस्थ गनं तत्र सति गोप्याङ्गस्यादर्शनेन निर्यन्त्रणं निधु वनविलसितमिति अखण्डबुद्धिनिर्ग्राह्योवाक्यार्थ एवार्थोवाक्यमेव च वाचकमिति येप्याहुस्तैरप्यवि द्यापदपतितैः पदपदार्थकल्पनाकर्त्तव्यैवेति तत्प क्षेप्यवश्य मुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्यएव ननु वाच्यादसं बद्धं तावन्न प्रतीयते। यतःकुतश्चिद्यस्य कस्यचिदर्थस्य प्रतीतेःप्रसंगात्॥ एवञ्च सम्बन्धात्

व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धे अवश्यं न भवतीति व्याप्तत्वेननियतधर्म्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्तद्रूपः पर्य्यवस्यति ॥ तथाहि ॥

भमधम्मिअ वीसत्थोसोसुणओ अज्जमारिओदेण। गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण ॥

अत्र गृहेश्वनिवृत्त्याभ्रमणम्विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति यद्यद्भीरुभ्रमणं तत्तद्भयकारण निवृत्त्युपलब्धिपूर्वकं । गोदावरी तीरेच सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः । अत्रोच्यते ॥ भीरुरपि गुरोः प्रभोर्वा निर्देशेन प्रियानुरागेणान्येन चैवं भूतेन हेतुना सत्यपि भय कारणे भ्रमतीत्यनैकान्तिकोहेतुः ॥ शुनो बिभ्यदपि वीरत्वेन सिंहान्नबिभेतीति विरुद्धोपि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा ननिश्चितोऽपि तु वचनान्नच वचनस्य प्रमाण्यमस्त्यर्थेना प्रतिबन्धादित्यसिद्धश्च ॥ तत्कथमेवं विधाद्धेतोः साध्यसिद्धिः ॥ तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोपि भवन्ति ॥ अतस्त्रात्रैव स्नानकार्य्यत्वे

नोक्तानीति नोपभोगएव प्रतिबद्धानि इत्यनैका न्तिकानि ॥ व्यक्तिवादिना चाधमपदसहायाना मेषां व्यञ्जकत्वमुक्तं नचात्राधमत्वं प्रमाणप्रति पन्नमिति कथमनुमानमेवं विधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेपि प्रकाशत इति व्यक्तिवादिनः पुनस्तददूषणं॥

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्ण भेदनिर्णयोनाम पञ्चम उल्लासः॥०॥

---

शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतं। गुण प्राधान्यतस्तत्र स्थितिःशब्दार्थचित्रयोः॥ नतु शब्द चित्रेऽर्थस्याचित्रत्वमर्थचित्रे वा शब्दस्य ॥ तथा चोक्तं॥ रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः। न कान्तमपि निर्भूषं विभाति वनिताननं। रूपकादि मलङ्कारं बाह्यमाचक्षते परे। सुपां तिङाञ्च व्युत्पत्तिंवाचां वाञ्छन्त्यलङ्कृतिं ॥ तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी। शब्दाभिधेयालङ्कार भेदादिष्टं द्वयन्तु न इति शब्दचित्रं यथा॥

प्रथममरुणच्छायस्तावत्ततः कनकप्रभस्तदनु विरहोत्तप्यत्तन्वीकपोलतलद्युतिः। उदयति ततोध्वान्तध्वंसक्षमः क्षणदामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥

अर्थचित्रं यथा॥

ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च। नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामिव न त्यजन्ति॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया पर्य्यवसानं। तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तं॥ अत्र च शब्दार्थालङ्कारभेदाद्बहवो भेदास्ते चालङ्कारनिर्णये निर्णेष्यन्ते॥

इति काव्यप्रकाशे षष्ठ उल्लासः॥ ०॥

---

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह॥ मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः हतिरपकर्षः शब्दाद्याइत्याद्यग्रहणाद्वर्णरचने॥ विशेषलक्षणमाह॥ दुष्टं पदं श्रुतिकटुच्युतसंस्कृत

प्रयुक्तमसमर्थं निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलं । सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थं भवेत्क्लिष्टं । अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥ श्रुतिकटुपरुषवर्णरूपं दुष्टं यथा ॥

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः । आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥

अत्र कार्तार्थ्यमिति ॥ च्युतसंस्कृतिव्याकरणलक्षणहीनं यथा ॥

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डरप्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते । तत्पल्लीपतिपुत्रिकुञ्जरकुलं कुम्भाभयाभ्यर्थनादीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥

अत्रानुनाथत इति । सर्पिषोनाथतइत्यादावाशिष्येव नाथतेरात्मने पदं विहितं । आशिषि नाथ इति अत्र तु याचनमर्थस्तस्मादनु नाथति स्तनयुगमिति पठनीयं ॥ अप्रयुक्तं तथाम्नातमपि कविभिर्नादृतं यथा ॥

यथायन्दारुणाचारः सर्व्वदैव विभाव्यते । तथा मन्येदैवतोस्य पिशाचो राक्षसोथवा ॥

अत्र दैवतशब्दो दैवतानि पुंसि वेति पुंस्याम्ना
तोपि न केनचित्प्रयुज्यते ॥ असमर्थं ॥ यत्तद
पद्यते नच तत्रास्य शक्तिः । यथा ॥

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः । सुरस्रोतस्वि
नेष हन्ति सम्प्रति सादरं ॥

अत्र हन्तीति गमनार्थं निहतार्थं यद्युभयार्थ
मप्रसिद्धेऽर्थे प्रयुक्तं । यथा ॥

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन । मुग्धा
साध्वसतरला विलोक्य परिरभ्य चुम्बिता सहसा ॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्व
लीकृतरूपोर्थोव्यवधीयते ॥ अनुचितार्थं यथा ॥

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्त्रिभिरिष्यते
च या । प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुता
मुपागताः ॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थं
निरर्थकं पादपूरणमात्रप्रयोजनञ्चादिपदं यथा ।

उत्फुल्लकमलकेसरपरागगौरद्युतेमम हि गौरि । अभि
वाञ्छितं प्रसिद्ध्यतु भगवति युष्मत्प्रसादेन ॥

अत्र हि शब्दः । अवाचकं यथा ॥

अनन्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः॥

अत्र जन्तुपदमदातर्य्यर्थे विवक्षितं तत्र च नाभिधायकं। यथा वा॥

हाधिक्सा किलतामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितं। किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं तादृग्यामवती मयो भवति मे नो जीवलोकोऽधुना॥

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकं। यच्चोपसर्गसंसर्गादर्थान्तरगतं। यथा॥

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः। भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥

अत्र दधदित्यर्थे विदधदिति त्रिधेति व्रीडा जुगुप्सा मङ्गलव्यञ्जकत्वात् यथा॥

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते। तस्य धीशालिनः कोन्यः सहेतारालितां भ्रुवम्॥ लीलातामरसाहतोन्यवनितानिःशङ्कदष्टाधरः कश्चित्केसरदूषितेक्षणइव व्यामील्यनेत्रे

स्थितः। मुग्धाकुड्मलिताननेन दधती वायुं स्थिता तस्य सा भ्रान्त्या धूर्त्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ॥ मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्घनरुचिरकलापो निःसपत्नोऽद्य जातः। रतिविगलितबन्धे केशपाशे प्रियायाः सति कुसुमसनाथे कं हरेदेष बर्ही ॥

एषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः संदिग्धं यथा ॥

आलिङ्गितस्तत्र भवान् संपराये जयश्रिया। आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र वन्द्यां किं हठहृतमहिलायां किं वा नमस्यामिति सन्देहः॥ अप्रतीतं यत्केवले शास्त्रे प्रसिद्धं यथा ॥

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः। विधीयमानमप्येतन्न भवेत्कर्मबन्धनं ॥

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः॥ ग्राम्यं यत्केवले लोके स्थितं यथा॥

राकाविभावरीकान्तसंक्रान्तद्युतिते मुखं। तपनीयशिलाशोभा कटिश्च हरते मनः॥

अत्र कटिरिति नेयार्थं॥ निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित्का

स्विन्नैव त्वयाक्लिन इति ॥ यन्निषिद्धं वाच्यमिकं ॥ यथा ॥

शरत्कालसमुल्लासि पूर्णिमाशर्व्वरीप्रियं । करोति ते मुखं तन्वि चपेटापातनातिथिं ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ॥ अथ समासगतमेव दुष्टमिति सम्बन्धः । अन्यत्केवलं समासगतञ्च ॥ क्लिष्टं यत्रार्थप्रतिपत्तिर्व्यवहिता ॥ यथा ॥

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः । सदृशं शोभते ऽत्यर्थं भूपाल तव चेष्टितं ॥

अत्र अत्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः । अविमृष्टः प्राधान्ये नानिर्दिष्टोविधेयांशोयत्र तत् यथा ॥

मूर्द्धामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधाराधौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नां । कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां दोष्णां चैवां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥

अत्र मिथ्यामहिमत्वं नानुवाद्यं अपितु विधेयं। यथा वा ॥

स्रस्तां नितम्बादवलम्बमानां पुनःपुनः केसरपुष्पकाञ्चीं न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य।

अत्र द्वितीयत्वमात्रमुत्प्रेक्षितं मौर्वीन्द्वितीयामिति युक्तः पाठः यथा वा॥

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु। वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥

अत्रालक्षिताजनिरिति वाच्यं यथावा॥

आनन्दसिन्धुरतिचापलशालिचित्तसंदाननैकसदनं क्षणमप्यमुक्ता। या सर्वदैव भवता तदुदन्तचिन्ता तान्तिं तनोति तव सम्प्रति धिग्धिगस्मान्॥

अत्र न मुक्तेति निषेधोविधेयः यथा॥

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः सुरधनुरिदं दूराकृष्टं न तस्य शरासनं। अयमपि पटुर्धारासारोन वाणपरम्परा न कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी॥

इत्यत्र नत्वमुक्ततानुवादेनान्यदत्र किञ्चिद्विहितं यथा॥

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः। अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्॥

इत्यत्र अत्रस्तत्वाद्यनुवादेनात्मनोगोपनादिः। विरुद्धमतिकृद्यथा॥

सुधाकरकराकारविशारदविचेष्टितः । अकार्य्यमित्रमेकोसौ तस्य किं वर्णयामहे ॥

अत्र कार्य्यं विना मित्रमिति विवक्षितं अकार्य्येषु मित्रमिति प्रतीतिः यथा वा ॥

चिरकालपरिप्राप्तिलोचनानन्ददायिनः । कान्ता कान्तस्य सहसा विदधाति गलग्रहं ॥

अत्र कण्ठग्रहमिति वाच्यं ॥

न त्रस्तं यदि नाम भूतकरुणा सन्तानशान्तात्मनस्तेन व्यारुजता धनुर्भगवतोदेवाद्भवानीपतेः । तत्पुत्रस्तु मदान्धतारकबधाद्विश्वस्य दत्तोत्सवः स्कन्दः स्कन्दइव प्रियोहमथवा शिष्यः कथं विस्मृतः ॥

अत्र भवानीपतिशब्दोभवान्याः पत्यन्तरे प्रतीतिं करोति यथावा ॥

गौरपि यद्वाहनतां प्राप्तवतः सोपि गिरिसुतासिंहः । सविधेनिरहङ्कारःपायाद्वःसोम्बिकारमणः ॥

अत्राम्बिकारमणइति विरुद्धां धियमुत्पादयति॥

श्रुतिकटु समासगतं यथा ॥

सा दूरे चसुधासान्द्रतरङ्गितविलोचना । वर्हिनिर्ह्रादनार्हीयं कालस्र समुपागतः ॥

म

एवमन्यदपि ज्ञेयं। अपास्य च्युतसंस्कारमसम र्थनिरर्थकं । वाक्येपि दोषाः सन्त्येते पदस्यांशेपि केचन ॥ केचन न पुनः सर्व्वे क्रमेणोदाहरणं ॥

सोध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत्सममंस्त बन्धून्। व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ द्रदात वीदुश्श्रवनेभावुकानां परम्परां। अनेडमूकताद्यैश्च द्यत् दोषै रसंमतान् ॥

अत्र दुश्श्रवनद्ग्रः अनेडमूकोमूकबधिरः ॥

सायकसहायवाहोर्मकरध्वजनियमितक्षमाधिपतेः । अब्ज रुचि भास्वरस्ते भातितरामवनिपश्लोकः ॥

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्र पर्य्यायाः शराद्यर्थतया प्रसिद्धाः ॥

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितोयशोगायन्त्येते दिशिदिशिच नग्नास्तव विभो। शरज्ज्योत्स्नागौरस्फुटविकट सर्वाङ्गसुभगा तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नु पश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः॥

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययं । निद्रां सहस्रपर्णानां पलायनपरायणां ॥

अत्र आशभाड्विष्णुधामविषमाश्वनिशापद॰ शब्दाः प्रहृष्टजलदगगनसमाश्वसङ्कोचपत्राणाम वाचकाः ॥

नृपतेरुपसर्पन्ती कम्पना वामलोचना। तत्तत्प्रहणनोत्साहवतीमोहनमादधौ ॥

अत्रोपसर्पणप्रहणनमोहनशब्दा ब्रीडादायित्वाद्श्लीलाः ॥

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते। इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्त्तनं ॥

अत्र वान्तोत्सर्गप्रवर्त्तनशब्दा जुगुप्सादायिनः ॥

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे। भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकं ॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वं ॥

सुरालयोल्लासपरः प्राप्तपर्य्याप्तकम्पनः। मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यते ॥

अत्र किं सुरादिशब्दा देवसेनाशरविभूत्यर्थाः। किं मदिराद्यर्था इति सन्देहः ॥

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः। दृढभूमिः प्रियप्राप्तौ यत्नः सफलितः प्रभो ॥

अत्राधिमात्रोपायादयः शब्दाः योगशास्त्रमात्र
प्रयुक्तत्वादप्रतीताः ॥

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः । करोति खाद्
पानं सदैव तु यथा तथा ॥

अत्र गल्लादयः शब्दा ग्राम्याः ॥

वस्त्रवैदूर्य्यचरणैः चतसत्त्वरजः परा । निष्कम्पा रचित
नेत्रद्वन्द्वं बोधय साम्प्रतं ॥

अत्राम्बररत्नपादैः चततमाः अचला भूःक्षता
नेत्रद्वन्द्वं बोधयेति नेयार्थता ॥

धम्मिल्लस्य न कस्य प्रेच्यनिकामकुरङ्गशावाच्याः । रज्यत्य
पूर्व्वबन्धव्युत्पत्तेर्मानसं शोभा ॥

अत्र धम्मिल्लस्य शोभां प्रेच्य कस्य मानसं न
रज्यतीति सम्बन्धे क्लिष्टत्वं ॥

न्यक्कारोह्ययमेव मे यदरयस्तत्राप्यसौ तापसः सोऽप्यत्रैव
निहन्ति राचसकुलं जीवत्यहो रावणः । धिक् धिक् शक्रजित
प्रबोधितवता किङ्कुम्भकर्णेन वा स्वर्गग्रामटिकाविलुण्ठनवृथे
च्छूनैः किमेभिर्भुजैः ॥

अत्रायमेव न्यक्कारइति वाच्यं उच्छूनत्वमात्र
चानुवाद्यं न वृथात्वविशेषितं अत्र च शब्दरच

नाविपरीताकृतेति वाक्यस्यैव दोषेण वाक्यार्थस्य ॥ यथा वा ॥

अपाङ्गसंसर्गितरङ्गितं दृशोर्भ्रुवोररालान्तविलासिवेल्लनं। विसारिरोमाञ्चनकञ्चुकं तनोस्तनोति योसौ सुभगे तवागतः ॥

अत्र योसाविति पदद्वयमनुवाद्यमात्रप्रतीतिकृत्॥ तथाहि ॥ प्रक्रान्तप्रसिद्धाऽनुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते ॥ क्रमेणोदाहरणं ॥

कातर्य्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितं । अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ इयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः। कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥ उत्कम्पिनी भयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती। क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षितासि ॥

यच्छब्दस्तूत्तरवाक्यार्थगतत्वेनोपात्तः सामर्थ्यात् पूर्व्ववाक्यार्थगतस्य तच्छब्दस्योपादानं नापेक्षते। यथा॥

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानम्बिनासा-
काङ्क्षः यथात्रैव श्लोकेऽऽद्यपादयोर्व्यत्यासे द्वयोरु-
पादाने तु निराकाङ्क्षत्वम्प्रसिद्धं । अनुपादानेऽपि
सामर्थ्यात्क्वचिद्द्वयमपि गम्यते। यथा ॥

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि
तान्प्रतिनैष यत्नः । उत्पत्स्यतेऽस्ति मम कोपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

अत्र य उत्पत्स्यते तं प्रतीति ॥ एवञ्च तच्छब्दा-
नुपादानेन साकाङ्क्षत्वं॥ नचासाविति तच्छब्दार्थ-
माह ॥

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डला-
ग्रणीः। वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवा-
गतः ॥

अत्र हि न तच्छब्दार्थप्रतीतिः। प्रतीतौ वा॥

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैक-
मल्लः। यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं
स्यात् ॥

अत्र स इत्यस्यानर्थक्यं स्यात् ॥ अत्र ॥

योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः।
स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयं॥

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्त इति उच्यते तर्ह्यत्रैव वाक्यान्तरे उपादानमर्हति न तत्रैव यच्छब्दस्य हि निकटे स्थितः प्रसिद्धं परामृशति । यथा ॥

यत्तदूर्जितमत्युग्रं चात्रंतेजोऽस्य भूपतेः । दीव्यताक्षैस्तदानेन नूनं तदपि हारितं ॥

इत्यत्र तच्छब्दः ॥ ननु कथं ॥

कल्याणानां त्वमिह महसामाश्रिये त्वं विधत्से पुण्यां लक्ष्मीमथमयि दृशं देहि देव प्रसीद । यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय ॥

अत्र यद्यदित्युक्त्वा तन्मे इत्युक्तं उच्यते । यद्यदिति येन केनचिद्रूपेण स्थितं सर्व्वात्मकं वस्त्वाक्षिप्तं तथा ॥

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा । मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्य्यानुजोसौ गुरुर्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतं ॥

अत्रार्य्यस्येति तातस्येति च वाच्यं । नत्वनयोः समासे गुणीभावः कार्य्यः । एवं समासान्तरेष्वप्युदाहार्य्यं विरुद्धमतिकृद्यथा ॥

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः । विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धा प्रतीतिः ॥ पदैकदेशे यथासम्भवं क्रमेणोदाहरणं ॥

अलमतिचपलत्वात्स्वप्नमायोपमत्वात्परिणतिविरसत्वात्सङ्गमेन प्रियायाः । इति यदि शतकृत्वस्तत्त्वमालोचयाम-स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

अत्र त्वादिति ॥ यथा वा ॥

तद्गच्छ सिद्ध्यै कुरु देवकार्य्यमर्थोयमर्थान्तरलभ्य एव । अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥

अत्र ध्यैब्ध्यै इति कष्टं ॥

यस्याप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्त्ति । बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्तां ॥

अत्र मत्ताशब्दः क्षीवार्थेननिहतार्थः ॥

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासितप्रोत्सर्प्पिद्विरहानलेन च ततः सन्तापितानां दृशां । सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥

अत्र दृश्यामिति वक्ष्वचनं निरर्थकं कुरङ्गच्छायया एकस्या एवोपादानात् नचालसवलितेत्यादिपद्यापारभेदाद्बहुत्वं ॥ व्यापाराणामनुपात्तत्वात् ॥ नच व्यापारेऽत्र दृक्शब्दो वर्त्तते ॥ अत्रैव कुरुत इत्यात्मनेपदमप्यनर्थकम् । प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्रभिप्रायक्रियाफलाभावात् ॥

चापाचार्य्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः । अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधाम्बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः ॥

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ॥

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः । परमार्थतः सहृदयं वहति पुनः कालकूटघटितमिव ॥

अत्र पेलवशब्दः ॥

यः पूयते सुरसरिन्मुखतीर्थसार्थस्नानेन शास्त्रपरिशीलनकीलनेन । सौजन्यमान्यजनिरूर्जितमूर्जितानां सोयं दृशोः पतति कस्यचिदेव पुंसः ॥

अत्र पयशब्दः ॥

विनयप्रणयैककेतनं सततं योभवदङ्ग तादृशः ॥ कथ
सतद्वदीप्सतां तदभिप्रेतपदं समागतः ॥

अत्र प्रेतशब्दः ॥

कस्मिन्कर्म्मणि सामर्थ्यमस्य नोत्तपतेतरां । अयं सा
रस्तस्मादञ्जलिर्ब्बध्यतामिह ॥

अत्र किं पर्व्वं साधुरुत साधुषु चरती
सन्देहः ॥

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः । सुदु
वचोवाणैस्तेजोयस्य विभाव्यते ॥

अत्र वचःशब्देन गीःशब्दोलक्ष्यते ॥ अत्र
न केवलं पूर्व्वपदं यावदुत्तरपदमपि पर्य्यायप
वर्त्तनं न क्षमते ॥ जलध्यादावुत्तरपदमेव
वडवानलादौपूर्वपदमेव ॥ यद्यप्यसमर्थस्यैवा
त्तादयः केचन भेदास्तथाप्यन्यैरलङ्कारकारै
भागेन दर्शिता इति भेदप्रदर्शनेनोदाहर्त्त
इति च विभज्योक्ताः ॥ प्रतिकूलवर्णमुपहत
विसर्गं विसन्धिहतवृत्तं । न्यूनाधिककथितपदं
त्यकर्षं समाप्तपुनरात्तं ॥ अर्द्धान्तरैकवाचकमभ
तयोगमनभिहितवाच्यं ॥ अपदस्थपदसम
सङ्कीर्णं गर्भितं प्रसिद्धिहतं ॥ भग्नप्रक्रममक्रमम

परार्थं च वाक्यमेव तथा ॥ रसानुगुणत्वं वर्णानां वक्ष्यते तद्विपरीतं प्रतिकूलवर्णं ॥ यथा शृङ्गारे ॥

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि मां । कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥ रौद्रे देशः सोयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः । तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितं यथा ॥

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् । उज्ज्वालः परशुर्भवतु शिथिलस्त्वत्कण्ठपीठातिथिर्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः । उपहतउत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् ॥

धीरो विनीतो निपुणो वराकारो नृपोत्र सः । यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥

विसन्धिः ॥ सन्धेर्वैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वञ्च यथा ॥

राजन्विभान्ति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलान्तः। धीदोर्बले अतितते उचितार्थवृत्ती आतन्वती विजयसम्पदमेत्यभातः॥ यथा वा॥ ततउदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः। निजवंशउदात्तकान्तिवेत मुक्तामणिवच्चकास्त्यनर्घ्यः॥

संहितां न करोमीति स्वेच्छया सकृदपि दोषः प्रगृह्यादिहेतुकत्वे त्वसकृत्॥

वेगादुड्डीय गगने चलच्चामरचेष्टितः। अयमुत्पतते पत्रीततोत्रैव रुचिङ्कुरु॥

अत्र सन्धावश्लीलता॥

उर्व्यसावत्र तर्वालीमर्वन्ते चार्ववस्थितिः। नात्रर्जुयुज्यते गन्तुं शिरोनमयतन्नमाक्॥

हतं लक्षणानुसरणेप्यश्रव्यं अप्राप्तगुरुभावान्तलघुरसाननुगुणञ्च वृत्तं यत्र तत् हतवृत्तं॥ क्रमेणोदाहरणं॥

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसम्फलं। सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादुस्यात्प्रियारदनच्छदात्॥

अत्र यदिहान्यत्स्वादु इत्यश्रव्यं यथा वा॥

जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण। अह णवरं जस्स दोसो पडिवक्खेहिं पि पडिवणो॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ॥

विकसितसहकारभारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः॥

अत्र हारिप्रमुदितसौरभेति पाठो युक्तः। यथा वा॥

धन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा। श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलात् दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च॥

अत्र वस्त्राण्यपीति पाठे लघुरपि गुरुतां भजते॥

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयञ्च तवैते॥

हास्यरसव्यञ्जकमेतद्वृत्तम्॥ न्यूनपदं यथा॥

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः। विराटस्यावासे स्थितमनुचितारम्भनिभृतं गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

अत्रास्माभिरिति खिन्नं इत्यस्मात्पूर्व्वमित्थमिति च ॥ अधिकं यथा ॥

स्फटिकाकृतिनिर्मलःप्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः अविरुद्धसमन्वितोक्तियुक्तः प्रतिमल्लास्तमयोदयः स कोपि ॥

अत्राकृतिशब्दः । यथा वा ॥

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः । यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥

अत्र कृतमिति कृतं प्रत्युत प्रक्रमभङ्गमाव इति ॥ तथाच यदपिचन कुरङ्गलोचनानामिति पाठे निराकाङ्क्षप्रतीतिः ॥ कथितपदं यथा ॥

अधिकरतलतल्पं कल्पितस्वापलीलापरिमिलननिमील त्पाण्डिमागण्डपाली । सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकं ॥

अत्र लीलेति ॥ पतत्प्रकर्षं यथा ॥

कः कः कुत्र नघुर्घुरायितघुरीघोरोघुरेत्सूकरः कः कं कमलाकरं विकमलं कर्त्तुं करीनोद्यतः । के के कानि वनान्यरण्यमहिषानोन्मूलयेयुर्यतः सिंहीस्नेहविलासबद्धवसतिःपञ्चाननोवर्त्तते ॥

समाप्तपुनरात्तं यथा ॥

ओङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकानां रवो झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः । तन्व्याः कञ्चुलिकापसारणभुजक्षेपस्खलत्कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥

द्वितीयार्द्धगतैकवाचकशेषं प्रथमार्द्धं यथा ॥

मसृणचरणपातं गम्यतां भूः सदर्भा विरचयसिचयान्तं मूर्द्ध्नि घर्मः कठोरः । तदिति जनकपुत्री लोचनैरश्रुपूर्णैः पथि पथिकवधूभिः शिक्षिता वीक्षिता च ॥

अभवन्मतद्दृष्टोयोगः सम्बन्धोयत्र ॥

येषान्तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभिर्लीलापानभुवश्च चन्दनतरुच्छायासु यैः कल्पिताः । येषां ऊं हृतयः कृतामरपतिक्षोभाः क्षपाचारिणां किन्तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितं ॥

अत्र गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यादित्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परसमन्वये तैरित्यत्र विशेष्यस्याप्रतीतिरिति ॥ क्षपाचारिभिरिति पाठे युज्यते समन्वयः ॥

त्वमेवं सौन्दर्या स च रुचिरतायाःपरिचितः कलानां सीमानं परमिह युवामेव भजतः । अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वामतः शेषं यत्स्याज्जितमिह तदानीं गुणि

लया॥ यथा वा॥ सङ्ग्रामाङ्गणमागतेन भवता चापे समारो पिते देवाकर्णय येन येन सहसा यद्यत्समासादितं। कोदण्डे शराः शरैररिशिरस्तेनापिभूमण्डलं तेन त्वं भवता च कीर्त्ति रतुला कीर्त्त्या च लोक त्रयं॥

अत्राकर्णनक्रिया कर्म्मत्वे कोदण्डं शरानित्यादि वाक्यार्थस्य कर्म्मत्वे कोदण्डः शराइति प्राप्तं। नच यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि नच केन केनेत्यादि प्रश्नः यथा वा॥ चापाचार्य्यस्त्रिपुरविजयीत्यादौ भार्गवस्य निन्दायां तात्पर्य्यङ्कृतवतेति परशौ सा प्रतीयते कृतवत इति तु पाठे मतयोगो भवति। यथावा॥

चत्वारोवयमृत्विजः स भगवान् कर्म्मोपदेष्टा हरिः सङ्ग्रामाध्वरदीक्षितोनरपतिः पत्नीगृहीतव्रता। कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते। तथा॥

जङ्घाकाण्डोरुनालोनखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयोमञ्जुमञ्जीरभृङ्गः। भर्त्तुर्नृत्तानु

कारे जयति निजतनुस्वच्छलावण्यवापीसम्भूताम्भोधिशोभां विद घदभिनवोदण्डपादो भवान्याः ॥

अत्र दण्डपादगता निजतनुः प्रतीयते भवान्याः सम्बन्धिनीतु विवक्षिता ॥ अवश्यं वक्तव्यमनुक्तं यत्र यथा ॥

अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैरपहृतस्य तथापि नास्था । कोप्येष वीरशिशुकाकृतिरप्रमेयमाहात्म्यसारसमुदायमयः पदार्थः ॥

अत्रापहृतोस्मीत्यपहृतत्वस्य विधिर्वाच्यः ॥ तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः ॥ यथावा ॥

एषो हिमाद्रितनयामुखपद्मजन्मा प्राप्तः सुरासुरमनोरथदूरवर्त्ती । स्वप्ने निरुद्धघटनाधिगताभिरूपलक्ष्मीफलामसुरराजसुतां विधाय ॥

अत्र मनोरथानामपि दूरवर्त्तीत्यप्यर्थो वाच्यः यथावा ॥

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः । कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः ॥

अत्रापराधस्य लवमपीति वाच्यं ॥ अस्था-
स्थपदं यथा ॥

प्रियेण सङ्ग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने
स्रजन्न काचिद्विजहौ जलाविलां वसन्तिहि प्रेम्णि गुणा
वस्तुनि ॥

अत्र काचिन्न जहाविति वाच्यं। यथा ॥

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्रा-
ङ्कितकन्धरेन्दुशकलेनान्तःकपोलस्थले । पार्वत्यानख ल-
क्षितसखीनर्मस्मितह्रीतया प्रोन्मृष्टः करपल्लवेन कुटि-
लाम्रच्छविः पातु वः ॥

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिलातामेति वाच्
अस्थानस्थसमासं यथा ॥

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि स्था-
तुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः । प्रोद्यद्दू-
रतरप्रसारितकरः कर्षत्यसौ तत्क्षणात् फुल्लकैरवकोशनि-
र्यदलिश्रेणी कृपाणीं शशी ॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः ॥ कवेरुक्तौ
तु कृतः। संकीर्णं यत्र वाक्यान्तरस्य पदानि वाक्या-
न्तरमनुप्रविशन्ति ॥

किमिति न पश्यसि कोपं पादगतं वहुगुणं गृहाणेमं। ननु मुञ्च हृदयनाथं कण्ठेमनसस्तमोरूपं॥

अत्र पादगतं वहुगुणं हृदयनाथं किमिति न पश्यति इमं कण्ठे गृहाण मनसस्तमोरूपं कोपं मुञ्चेति एकवाक्यतायान्तु क्लिष्टमिति भेदः॥ गर्भितं॥ यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति॥ यथा॥

परोपकारनिरतैर्दुर्जनैः सह सङ्गतिः। वदामि भवतस्तत्त्वं न विधेया कदाचन॥

अत्र तृतीयपादोवाक्यान्तरमध्ये प्रविष्टः॥ यथा वा॥

लग्नं रागावृताङ्ग्यासुदृढमिह ययैवासियष्ट्यारिकण्ठे मातङ्गानामपीहोपरिपरपुरुषैर्याच दृष्टा पतन्ती। तत्सक्तोयं न किञ्चिद्गणयतिविदितं ते स्तुतेनास्मि दत्ता भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्त्तिः॥

अत्र विदितं ते स्त्विति एतत्कृतं प्रत्युत लक्ष्मीस्ततोपसरतीति विरुद्धमतिकृत्॥ मञ्जीरादिषुरणितप्रायं पक्षिषु च कूजितप्रभृतिस्तनितमणितादिसुरते मेघादिषु गर्जितप्रमुखमिति प्रसिद्धिमतिक्रान्तं यथा॥

महाप्रलयमारुतक्षुभितपुष्करावर्त्तकप्रचण्डघनगर्जि-
प्रतिहतानुकारीमुहुः । रवः श्रवणभैरवः स्थगितरोदसी-
कन्दरःकुतोद्य समरोदधेरयमभूतपूर्व्वः पुरः ॥

अत्र रवोमण्डूकादिषुप्रसिद्धोनतूक्तविशेषे सिं-
नादे ॥ भग्नः प्रक्रमः प्रस्तावोयत्र ॥ यथा ॥

नाथे निशायानियतेर्नियोगादस्तंगते हन्त निशापि याता
कुलाङ्गनानां हि गुणानुरूपं नातः परं भद्रतरं चकास्ति॥

अत्र गतेति प्रक्रान्ते यातेति प्रकृतेः गतानिश-
पीति तु युक्तं । ननु नैकपदं द्विःप्रयोज्यं प्रायेणे-
न्यत्र कथित पदं दुष्टमिति चेदैवोक्तं तत्कथं
कस्य पदस्य द्विःप्रयोगः ॥ उच्यते उद्देश्यप्रतिनि-
र्देश्यव्यतिरिक्तोविषयएकपदप्रयोगनिषेधस्य
तद्वति विषये प्रत्युत तस्यैव पदस्य सर्व्वनाम्नोवा
योगं विना दोषः ॥ तथाहि ॥

उदेति सविता ताम्रस्ताम्रएवास्तमेति च । सम्पत्तौ च वि-
त्तौच महतामेकरूपता ॥

अत्र रक्तएवास्तमेतीति यदि क्रियते तदा
दान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयैव प्रति-
भासमानः प्रतीतिं स्थगयति ॥ अत्र तादृगेवेति
पाठे न दोषः सर्व्वनाम्नः प्रयोगात् ॥ यथावा ॥

यशोधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामति वर्त्तितुं वा। निरुत्सुकानामभि योगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः॥

अत्र प्रत्ययस्य॥ सुखमीहितुं वेति युक्तः पाठः॥

ते हिमालयमामन्त्र्य पुनःप्रेक्ष्य च शूलिनं। सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥

अत्र सर्वनाम्नः॥ अनेन विसृष्टा इतितु वाच्यम्॥

महीभृतः पुत्रवतोपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिं। अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा॥

अत्र पर्य्यायस्य महीभृतोऽपत्यवतोऽपीतियुक्तं॥ अत्र सत्यपि पुत्रे कन्यारूपेऽपत्ये स्नेहोऽभूदिति केचित्समर्थयन्ते॥

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः। नियता लघुता निरायतेरगरीयान्नपदं नृपश्रियः॥

अत्रोपसर्गस्य पर्य्यायस्य च॥ तदभिभवः कुरुते॥ निरायति लघुतां भजते निरायतिः लघुतावान्न पदं नृपश्रियः॥

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीर श्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्त सत्त्वाः। सेमु

मित्यादिवान्याः प्रति पदमपरा भूमिवत्कम्पमानाः प्रख्याते पार्थिवानामशिवमिति पुरोभाविनार्य्यः शशंसुः॥

अत्र वचनस्य काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीकाइति कम्पमाना इत्यत्र कम्पमापुरिति पठनीयम्॥

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु। विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रान्तिं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥

अत्र कारकस्य। विश्रब्धा रचयन्तु शूकरवरा इत्यदुष्टं॥

अकलिततपस्तेजोवीर्य्यप्रथिम्नि यशोनिधाववितथमदाध्माते रोषान्मुनावभिधावति। अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च॥

अत्र क्रमस्य॥ पादोपसंग्रहणायेति पूर्वंवाच्यं एवमन्यत्राप्यनुसर्त्तव्यं॥ अविद्यमानः क्रमो यत्र यथा॥

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः। कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥

अत्र त्वंशब्दानन्तरश्चकारोयुक्तः ॥ यथावा ॥

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथदोषाकरश्रीर्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनीखड्गयष्टिः। आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धयाते प्रोच्यैवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातं ॥

अत्र इत्थं प्रोच्येवेति न्याय्यम् ॥ तथा ॥ लग्नं रागावृताङ्ग्येत्यादौ इति श्रीनियोगादिति वाच्यम्। अमतः प्रक्रान्तविरुद्धःपरार्थो यत्र ॥ यथा ॥

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

अत्र प्रकृते रसे विरुद्धशृङ्गारस्य व्यञ्जकोऽपरोर्थः ॥ अर्थदोषानाह ॥ अर्थोदुष्टः कष्टोव्याहतपुनरुक्तः दुःक्रमग्राम्यः सन्दिग्धोनिर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ॥ अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्तः साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ॥ विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ दुष्टइति सम्बध्यते ॥ क्रमेणोदाहरणं ॥

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमादनन्दः।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥

अत्र अतिविततत्वादयोनुपादानेपि प्रतिपाद्य मानमर्थं न बाधन्त इत्यपुष्टाः नत्वसङ्गताः पुनरुक्ता वा ॥

यदा मध्ये यासामियममृतनिष्यन्दसरसा सरस्वत्युद्दामा वहति बहुमार्गा परिमलं। प्रसादात्ताएताघनपरिचिताः केनमहतां महाकाव्यव्योम्नि स्फुरितमधुरायान्तु रुचयः॥

अत्र यासाङ्कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति ता गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु॥ यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति सङ्क्षेपार्थः॥

जगति जयिनस्तेते भावा नवेन्दुकलादयः प्रकृति मधुराः सन्त्येवान्ये मनो मदयन्ति ये। ममतु यदियं याता लोके विलोचनचन्द्रिकानयनविषयं जन्मन्येकः सएव महोत्सवः॥

अत्रेन्दुकलादयोयं प्रत्यप्रशस्यप्रायाः सएव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वंहत मनुमतमित्यादि॥

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः॥ यथा वा॥

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे सेनानाथेस्थितेऽस्मिन्मम पितरि गुरौ सर्व्वधन्वीश्वराणां। कर्णालं सम्भ्रमेण व्रज कृप समरं मुञ्च हार्दिक्यशङ्कां ताते चापद्वितीये वहति रणधुरं कोभयस्यावकाशः॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः॥

भूपालरत्ननिर्दैन्यप्रदानप्रथितोत्सव। विश्राणय तुरङ्गं मे मातङ्गं वा मदालसं॥

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः॥

स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते। तदपि साम्प्रतमाहर कूर्परं त्वरितमूरुमुदञ्चयकुञ्चितं॥

एषोऽविदग्धः॥

मात्सर्य्यमुत्सार्य्येत्यादि॥

अत्र प्रकरणाद्यभावे सन्देहः॥ शान्तशृङ्गार्य्यन्यतराभिधाने तु निश्चयः॥

गृहीतं येनासीः परिभवभयान्नोचितमपि प्रभावाद्यस्यान्न खलु तव कश्चिन्न विषयः। परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्विमोक्ष्ये शस्त्रत्वामहमपि ततः स्वस्ति भवते॥

अत्र शस्त्रमोचने हेतुर्नोपात्तः॥

इदन्ते केनोक्तं कथय कमलातङ्कवदने यदेतस्मिं
कटकमिति धत्से खलु धियं ॥ इदं तद्दुःसाधाक्रमणक्षत
मास्त्रं स्मृतिभुवा तव प्रीत्या चक्रं करकमलमूले विनिहितं।

अत्र कामस्य चक्रं लोकेऽप्रसिद्धं ॥

उपपरिसरं गोदावर्य्याःपरित्यजताध्वगाः सरणिम
मार्गस्तावद्भवद्भिरिहेष्यतां । इहहि विहितो रक्ताशोकः
पिहिताशया चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

पादाघातेनाशोकस्य पुष्पोद्गमः कविषुप्रसि
नपुनरङ्कुरोद्गमः ॥

सुसितवसनालंकारायां कदाचन कौमुदी महसि सु
स्वैरंयान्त्यां गतोस्तमभूद्विधुः । तदनु भवतः कीर्त्तिः के
गीयत येन सा प्रियगृहमगान्मुक्ताशङ्का न नापि शुभप्र

अत्रामूर्त्तापि कीर्त्तिः ज्योत्स्नावत्प्रकाश
कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टं॥

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः। नानाविध
शास्त्राणि व्याचष्टे च शृणोति च ॥

ग्रहोपरागं विना रात्रौ स्नानंधर्म्मशास्
विरुद्धं ॥

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते। षाड्गुण्यानु
स्तस्य सत्यं सा निष्प्रयोजना ॥

एतदर्थशास्त्रेण ॥

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना । बभार कान्तेन कृतां करजोल्लेखमालिकां ॥

अत्र केयूरपदे नखक्षतं न निहितमित्येतत्कामशास्त्रेण ॥

अष्टाङ्गयोगपरिशीलनकीलनेन दुःसाधसिद्धिसविधं विदधद्विदूरे । आसादयन्नभिमतामधुना विवेकख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥

अत्र विवेकख्यातिस्ततः संप्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्नतु विवेकख्यातौ ॥ एवं विद्यान्तरैरपि विरुद्धमुदाहार्य्यं ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किं । सन्तर्पिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किं ॥

अत्र ततः किमिति न नवीकृतं । तत्तु यथा ॥

यदि दहत्यनलोत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः । लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ यच्चानुल्लिखिताक्षमेव निखिलं निर्माणमेतद्विधेरुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः पराः । याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपदस्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितं ॥

अत्र छायामात्रमणीन्कराक्षसुमनोरसाम्म
वोचितेति सनियमत्वंवाच्यं ॥

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोणएवाधरस्ते वा
काकुत्स्थवीर्य्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः। वाहिन्यः
सेताः चणमपि भवतोनैव मुञ्चत्यभीक्ष्णं स्वच्छेन्तर्मानसेऽ
कथमवनिपते तेऽम्बुपानाभिलाषः ॥

अत्र शोणएवेति नियमेन वाच्यः॥

श्यामां श्यामलिमानमानयतभोः सान्द्रैर्मषीकूर्चकै
तन्त्र मथप्रयुज्यहरत श्वेतोत्पलानां श्रियं। चन्द्रंचूर्णय
णाच कणशःकृत्वा शिलापट्टके येन द्रष्टुमहं चमे दशदि
दत्तमुद्राङ्किताः॥

अत्र ज्योत्स्नामिति श्यामाविशेषोवाच्यः॥

कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनिमकरालय
मंस्थाः। किं कौस्तुभेन विहितोभवतोननाम याञ्चा प्रसा
करः पुरुषोत्तमोपि ॥

अत्र एकेन किं न विहितोभवतः सनामे
सामान्यं वाच्यं ॥

अर्थित्वे प्रकटीकृतेपि न फलप्राप्तिः प्रभोः प्रत्युत द्रुह्यन्
रघिविरुद्धचरितो युक्तस्तया कन्यया। उत्कर्षञ्च परस्म

अशसोर्विस्रंसनं चात्मनः स्नीरत्नञ्च जगत्पतिर्दशमुखोदेवः कथं मृष्यते॥

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति। नहि पर स्येत्यनेन सम्बन्धो योग्यः॥

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं भक्तिर्भूत पतौ पिनाकिनि पदं लङ्केति दिव्या पुरी। उत्पत्तिर्द्रुहिणा न्वये च तदहो नादृग्वरो लभ्यते स्याच्चेदेष न रावणः क्व नु पुनः सर्व्वत्र सर्वे गुणाः॥

अत्र स्याच्चेदेष न रावण इत्यन्त एव समाप्यं॥

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा। निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्ख तयोर्निकृष्टयोर्भिन्नत्वं लग्नं रागावृताङ्गीत्यत्र वि हितं तेस्त्रिवित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते॥

प्रयत्नपरिबोधितःस्तुतिभिरद्य शेषे निशामकेशवमपाण्डवं भुवनमद्य निःसोमकं। इयं परिसमाप्यते रणकथाद्य दोः शालिनामपैतु रिपुकाननातिगुरुरद्य भारोभुवः॥

अत्र शयितः प्रयत्नेन बोध्यसे इति विधेयं॥ यथा वा॥

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्व्वर्हिभिः तेपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैर्दम्भस्य स्फुरितं विदन्नपि जनोजाल्मो गुणानीहते॥

अत्र वाताहारादित्रयं व्युत्क्रमेणवाच्यं॥

अरे रामाहस्ताभरणभसलश्रेणिशरणस्मरक्रीडाव्रीडाशमनविरहिप्राणदमन। सरोहंसोत्तंसप्रचलदलनीलोत्पल सखे सखेदोहं मोहं श्लथय कथय क्वेन्दुवदना॥

अत्र विरहिप्राणदमनेति नानुवाद्यं॥ लग्नं रागावृताङ्ग्येत्याद्यत्र वदितुं तेस्मिन्व्युपसंहृतोपि तेनेत्यादिना पुनरुपात्तः॥

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः। यथास्य जायते पातोन तथा पुनरुन्नतिः॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः यत्रैकोदोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति तथापि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतं॥ कर्णावतंसादिपदे कर्णादिध्वनिनिर्म्मितिः सन्निधानादिबोधार्थं॥ अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते॥ तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये यथा॥

अस्याः कर्णावतंसेन जितं सर्व्वं विभूषणं। तथैव शोभतेत्य न्तमस्याः श्रवणकुण्डलं। अपूर्व्वमधुरामोदप्रमोदितदिश स्ततः। आययुर्भृङ्गमुखराः शिरःशेखरशालिनः॥

अत्र कर्णश्रवणशिरःशब्दाः सन्निधानप्रतीत्यर्थाः॥

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे। धनुर्ज्याकिण चिह्नेन दोष्णा विस्फुरितं तव॥

अत्र धनुःशब्द आरूढत्वावगतये॥ अन्यत्र तु॥

ज्याबन्धनिस्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण। कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादादिति॥

अत्र केवलो ज्याशब्दः॥

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः। मुक्ताहारेण लसता हसतीव स्तनद्वयं॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः॥

सौन्दर्य्यसम्पत्तारुण्यं यस्यास्ते तेच विभ्रमाः। षट्पदान्पुष्पमालेव कान्नाकर्षति सासखे॥

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः। निरुपपदोहि मालाशब्दः पुष्पस्रजमेवाभिधत्ते। स्थितेष्वेतत्सम

र्थनं। न खलु कर्णवितंसादिवज्जघनकाञ्चीत्या
क्रियते। जगाद मधुरांवाचं विशदाक्षरशालि
मित्यादौ क्रियाविशेषणत्वेपि विवक्षितार्थप्रती
सिद्धौ गतार्थस्याविशेष्यस्य विशेषणदानार्थं कचि
योगः कार्य्यइति न युक्तं। युक्तत्वे वा॥

चरणत्र परित्राणरहिताभ्यामपि द्रुतं। पादाभ्यां दूरा
ध्वानं व्रजन्नेष न खिद्यते॥

इत्युदाहार्य्यं। ख्यातेऽर्थे निर्हेतोरदुष्टता॥ यथा

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्यां
उमामुखन्तु प्रतिपद्य लोलाद्विसंश्रयां प्रीतिमवाप लक्ष्मीः

अत्र रात्रौ पद्मस्य सङ्कोचोदिवा चन्द्रमसः
निष्प्रभत्वं लोकप्रसिद्धमिति नभुङ्क्ते इति हेतुं न
क्षते॥ अनुकरणे तु सर्वेषां श्रुतिकटुप्रभृती
दोषाणां यथा॥

मृगचक्षुषमद्राक्षमित्यादिकथयत्ययं। पश्यैष च ग
त्याह सुत्रामाणं यजेतिच॥

वक्राद्यौचित्यवशाद्दोषोपि गुणः क्वचित्क्व
नोभौ वक्तृप्रतिपाद्य व्यङ्ग्यवाच्यप्रकरणादी
महिम्ना दोषोपि क्वचिद्गुणः। क्वचिन्न दोषो
गुणः तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये

रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः । क्रमेणोदाहरणं ॥

दीधीवेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनं । क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते ॥ यदा त्वामहमद्राक्षं शब्दविद्याविशारदं । उपाध्यायं तदास्मार्षं समस्प्राक्षं च सम्मदं ॥ अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कणप्रायःप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् । पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ वाच्यवशाद्यथा ॥ मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के । कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितं ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः ॥ प्रकरणवशाद्यथा ॥

रक्ताशोककृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं नो दृष्टेति मुधैव चालयसि किं वाताभिभूतं शिरः । उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥

अत्र शिरोधूननेन कुपितस्य वचसि कचिन्नीरसेन गुणेन दोषः ॥ यथा ॥

शीर्णघ्राणाङ्घ्रिपाणीन् घृणिभिरपघनैर्घर्घराव्यक्तघो
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येकउल्लाघयन्यः । घ
स्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाःसिद्धसं
दधतु घृणयः शीघ्रमंहोविघातं ॥

अप्रयुक्तनिहतार्थौश्लेषादावदुष्टौ । यथा ॥

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतोय
त्तभुजङ्गहारवलयोगङ्गाञ्च योधारयत् । यस्याहुः श
च्छिरोहर इति स्तुत्यञ्च नामामराः पायात्स स्वयमन्धक
करस्त्वां सर्वदो माधवः ॥

अत्रमाधवपक्षेशशिमदन्धकक्षयकरश
प्रयुक्तनिहतार्थौ ॥ अश्लीलं क्वचिद्गुणो य
सुरतारम्भगोष्ठ्यां ॥

द्व्यर्थैः पदैः पिशुनयेच्चरहस्यवस्त्विति कामशास्त्रवि
करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते । उपसर्पन्
पुंसः साधनान्तर्विराजते । शमकथासु । उत्तानोच्छूनम
पाटितोदरसन्निभे । क्लेदिनि स्त्रीव्रणे सक्तिरक्रिमेः
जायते ॥ निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पा
नयाः सह माधवेन । रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्व
भवन्तु कुरुराजसुताः सभृत्याः ॥

अत्र भाव्यमङ्गलसूचकं । सन्दिग्धमपि वा

महिम्ना क्वचिन्नियतार्थप्रतीतिकृत् व्याजस्तुति पर्य्यवसायित्वे गुणः ॥ यथा ॥

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनंदेव । विलसत्करेणुगहनं संप्रतिसममावयोः सदनं॥

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे स्वयंप्रतीतङ्गुणः यथा ॥

आत्मारामाविहितरतयोनिर्व्विकल्पेसमाधौ ज्ञानोद्रेकाद्विघटितमनोग्रन्थयः सत्त्वनिष्ठाः। यंवीक्षन्ते कमपि तमसां ज्योतिषां वापरस्तात्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणं॥

स्वयंवा परामर्शेयथा ॥

षडधिकदशनाडीचक्रमध्यस्थितात्मा हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः। अविचलितमनोभिःसाधकैर्म्मृग्यमाणः स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥

अधमप्रकृत्युक्तिषुग्राम्योगुणः ॥ यथा ॥

फुल्लुक्करं कलमकूरणिहं वहन्तिजे सिन्दुवारविडवामहवल्लहादे। जे गालिदस्समहिसीदहिणोसरिच्छा ते किंचमुद्धविअइल्लपसूणपुञ्जा ।

अत्र कलमभक्तमहिषीदधिशब्दाग्राम्या अपि विदूषकोक्तौ ॥ न्यूनपदंक्वचिद्गुणोयथा॥

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा सान्द्र-
स्नेहातिरेकविगलच्छ्रीमन्नितम्बाम्बरा। मामामानदमाति
ममलमिति चामाक्षरोल्लापिनी सुप्ता किंनु मृतानु किं मनसि
लीना विलीना नु किं॥

क्वचिन्न गुणो न दोषः। यथा॥

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति स्व-
र्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः। तां हर्त्तुं वि-
बुधद्विषोपि न च मे शक्ताः पुरोवर्त्तिनीं साचात्यन्तमगोचरं
नयनयोर्यातेति कोयं विधिः॥

अत्र पिहितेत्यतोनन्तरं नैतद्यतइत्येतै-
पदैर्विशेषविधेरकरणान्न गुणः उत्तरा प्रतिप-
पूर्वां प्रतिपत्तिं बाधतइति न दोषः॥ अधिक
क्वचिद्गुणः॥ यथा॥

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्य्योन्मुखः खलज-
नकृतकं ब्रवीति। तत्साधवो न विदन्ति विदन्ति किन्तु
मृषा प्रणयमस्य न पारयन्ति॥

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदप-
यथावा॥

वद वदजितः स शत्रुर्नहतोजल्पंश्च तवतवास्मीति। चि-
चित्रमरोदीद्धाहेति परं मृते पुत्रे॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ॥ कथित पदं क्वचिद्गुणः ॥ लाटानुप्रासे अर्थान्तरसंक्रमित वाच्ये विहितस्यानुवाद्यत्वे च क्रमेणोदाहरणं ॥

सितकरकररुचिरविभाविभाकराकारधरणिधरकीर्त्तिः। पौरुषकमलाकमलासापि तवैवास्ति नान्यस्य ॥ ताला जाअन्ति गुणाजालादेसहिअ एहिं घेप्पन्ति। रइ किरणाणुगहिआइं होन्तिकमलाइं कमलाइं ॥ जितेन्द्रियत्वं विनयस्य कारणं गुण प्रकर्षोविनयादवाप्यते। गुणप्रकर्षेण जनोनुरज्यते जनानु रागप्रभवाहि संपदः ॥

पतत्प्रकर्षमपि क्वचिद्गुणः ॥ यथा ॥ उदाहृते प्रागप्राप्तेत्यादौ ॥ समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः ॥ यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहण मपि तु वाक्यान्तरमेव क्रियते ॥ यथात्रैव प्राग प्राप्तेत्यादौ ॥ अपदस्थसमासोक्वचिद्गुणः ॥ यथा उदाहृते रक्ताशोकेत्यादौ ॥ गर्भितं तथैव यथा ॥

होमिअवहत्थिअरेहोणिरङ्कुसो अहविवेअरहिओवि। सिविणेवि तुमम्मि पुणो पत्तिहि भत्तिंण पसुमरामि ॥

अत्र प्रतीहीतिमध्येदृढ प्रत्ययोत्पादनाय एव मन्यदपि लक्ष्यालक्ष्यं ॥ व्यभिचारिरसस्थायिभा वानां शब्दवाच्यता। कष्टकल्पनया व्यक्तिरनुभाव

विभावयोः । प्रतिकूलविभावादिग्रहोदीप्तिः पु
पुनः ॥ अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः
अङ्गिनोननुसन्धानं प्रकृतीनां विपर्य्ययः ॥ अन
स्याभिधानञ्च रसे दोषाःस्युरीदृशाः । स्वशब्दो
दानं व्यभिचारिणोयथा ॥

सव्रीडा दयितानने सकरुणा मातङ्गचर्म्माम्बरे सत्रा
भुजगे सविस्मयरसा चन्द्रे मृतस्यन्दिनि । सेर्ष्या जन्हुसुताव
कनविधौ दीना कपालोदरे पार्व्वत्या नवसङ्गमप्रण
दृष्टिः शिवायास्तु वः ॥

अत्र व्रीडादीनां ॥ व्यानम्रादयितानने मु
लिताभातङ्गचर्म्माम्बरे सोत्कम्पाभुजगे निमेषर
ताचन्द्रे मृतस्यन्दिनि। मीलद्भ्रूःसुरसिन्धुदर्शनवि
म्लानाकपालोदरे । इत्यादि तु युक्तं ॥ रस
स्वशब्देन शृङ्गारादिशब्देन वाच्यत्वं ॥ क्रमेणोद
हरणं ॥

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकितां
नेत्रयोः कृतवतोऽस्य गोचरे कोप्यजायत रसोनिरन्तरः
आलोक्यकोमल कपोलतलाभिषिक्तव्यक्तानुरागसुभगाम
रामरूपां पश्यैष वाल्यमतिवृत्यविवर्त्तमानः शृङ्गारसीमं
तरङ्गितमातनोति ॥

स्थायिनोयथा ॥

संप्रहारे प्रहरणैः प्रहाराणां परस्परं। ठणत्कारैःश्रुतिगतैरुत्साहस्तस्य कोप्यभूत्॥

अत्रोत्साहस्य॥

कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः। लीलाशिरोंशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावापर्य्यवसायिनः स्थिता इति कष्टकल्पना॥

परिहरति रतिं मतिं लुनीते स्खलति भृशं परिवर्त्तते च भूयः। इति वत विषमादशास्य देहं परिभवति प्रसभं किमत्र कुर्म्मः॥

अत्र रतिपरिहारादीनामनुभावादीनां करुणादावपि सम्भवात्कामिनीरूपोविभावोयत्नतः प्रतिपाद्यः॥

प्रसादे वर्त्तस्व प्रकटय मुदं सन्त्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः। निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनंरूपोविभावस्तत्प्रकाशितोनिर्वेदस्य व्यभिचारी उपात्तः॥

णिद्दुअरमणम्मिलोअणपहम्मि पडिए। गुरुअणमज्झमि।
सपरिहाररहिअआवणगमणंवेअमद्दइवह ॥

अत्र सकलपरिहारवनगमने शान्तानुभावे
दून्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं
दोषः ॥ दीप्तिः पुनः पुनर्यथा ॥ कुमारसम्भवे
विलापे। अकाण्डेच्छेदो यथा ॥ वीरचरिते द्वितीये
राघवभार्गवयोर्धाराधिरूढे वीररसे कङ्कणमो
नाय गच्छामीति राघवस्योक्तौ ॥ अङ्गस्याप्रध
स्याति विस्तरेण वर्णनं ॥ यथा ॥ हयग्रीव
हयग्रीवस्य। अङ्गिनोननुसन्धानं यथा रत्नाव
चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः
तयोदिव्या अदिव्या दिव्यादिव्याश्च ॥ वीर
शृङ्गारशान्तरस प्रधाना धीरोदात्तधीरोद्धत
ललितधीरप्रशान्ता उत्तममध्यमाधमाश्च ॥ त
रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्ये
किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवता
यान वर्णनीया ॥ तद्वर्णनं हि पित्रोः संभोगव
मिवात्यन्तमनुचितं ॥

क्रोधं प्रभो संहर संहरेति यावद्गिरः खेमरुतां चर
तावत्सवह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥

इत्युक्तवद्भ्रुकुट्यादिविकारवर्जितःसद्यः फलदः
क्रोधः। स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च
दिव्येष्वेव ॥ अदिव्येषु तु यावदवदानं प्रसिद्धमु
चितं वा तावदेवोपनिबद्धव्यं । अधिकन्तु निबध्य
मानमसत्यप्रतिभासेन नायकवद्वर्त्तितव्यं न प्रतिना
यकवदित्युपदेशेन पर्य्यवस्येत् दिव्यादिव्येषूभय
थापि॥ एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरो
दात्तादीनामप्यन्यथावर्णनं विपर्य्ययः ॥ तत्र
भवन्भगवन्नित्युत्तमेनाधमेन मुनिप्रभृतौ न
राजादौ भट्टारकेति न राजादौ परमेश्वरेति न
मुनिप्रभृतौ प्रकृतिविपर्य्ययोपत्तेर्वाच्यं ॥ एवं देश
कालवयोजात्यादीनां वेषव्यवहारादिकमुचितमे
वोपनिबद्धव्यं॥ अनङ्गस्य रसानुपकारकस्य वर्णनं
यथा॥कर्प्पूरमञ्जर्य्यांनायिकया स्वात्मना च वसन्त
वर्णनमनादृत्य वन्दिवर्णितस्य राज्ञः प्रशंसनं
ईदृशा इति नायिकापादप्रहारादिना नायकको
पादिवर्णनं॥ उक्तंहि ध्वनिकृता ॥ अनौचित्या
दृतेनान्यद्रसभङ्गस्य कारणं । प्रसिद्धौचित्यबन्धस्तु
रसस्योपनिषत्परेति ॥५८॥५९॥६०॥ इदानीं

कचिददोषा अप्येतइत्युच्यन्ते ॥ न दोषः स्वपदे
क्तावपि सञ्चारिणः कचित् ॥ यथा ॥

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया तै
र्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमा
त्तसाध्वसरसा गौरीनवे संगमे संरोहत्पुलकाहरेण हसता
शिवायास्तु वः ॥

अत्रौत्सुक्यशब्द इव तदनु विभावेन त
प्रतीतिकृत् ॥ अतएव दूरादुत्सुकमित्यादौ व्री
प्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुक
नुभावस्य सहसा प्रसारणादिरूपस्य तथा
पत्तिकारित्वाभावादुत्सुकमिति कृतं ॥ सञ्चार्या
विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ बाध्यस्येति
परं नदोषोयावत्प्रकृतरसपरिपोषकृत् ॥ यथा
काकार्य्यं शशलक्ष्मणः कचकुलमित्यादावत्र वि
कोदोषूकृतेष्वपि चिन्तायामेव विश्रान्तिरिति प्र
तरसपरिपोषः ॥

पाण्डुक्षामं वदनंहृदयं सरसं तवालसञ्च वपुः । आवे
यति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति
विरुद्धं ॥

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः। किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितं॥

इत्यत्राद्यमर्द्धं वाच्यत्वेनैवोक्तं॥ जीवितादप्यधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति। न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः न तु विनेयोन्मुखीकरणमत्र परिहारः। शान्तशृङ्गारयोर्नैरन्तर्य्यस्याभावात्॥ नापि काव्यशोभाकरणं॥ रसान्तरादनुप्रसमानाद्वा तथाभावात्॥ आश्रयैक्ये विरुद्धो यः स कार्य्यो भिन्नसंश्रयः॥ रसान्तरेणान्तरितो नैरन्तर्य्येण यो रसः॥ वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्य्येण विरोध इति रसान्तरमन्तरे कार्य्यं॥ यथा नागानन्दे शान्तस्य जीमूतवाहनस्य। अहो गीतमहो वाद्यमित्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो वर्णितः॥ न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्त्तते॥ यथा॥

भूरेणुदिग्धा नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणा सुराङ्गनाश्लिष्टभुजान्तरालाः॥

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमा
संवीजितास्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकू
विमानपर्य्यङ्कतलेनिषस्ताः कुतूहलाविष्टतया तदानीं।
स्मानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्य

अत्र वीभत्सशृङ्गारयोरन्तर्वीररसोनिवेशित

स्मर्यमाणो विरुद्धोपि साम्येनाथ विवक्षितः। अ
न्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परं॥

अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः। नाभ्यूरुजघनस्य
नीवीविस्रंसनः करः॥

एतद्भूरिश्रवसः समरभुवि पतितं हस्तमालो
तद्वधूरभिदधौ। अत्र पूर्व्वावस्थास्मरणं शृङ्गा
ङ्गमपि करुणं परिपोषयति॥

दन्तैःक्षतानि करजैस्वविपाटितानि प्रोद्भिन्नसान्द्रपु
भवतः शरीरे। दत्तानि रक्तमनसा मृगराजवध्वा जात
र्मुनि भिरप्यवलोकितानि॥

अत्र कामुकस्य दन्तक्षतादीनि यथाचमत्का
रकारीणि तथाजिनस्य ॥यथावा॥ परःशृङ्गारीव
दवलोकनात्सस्पृहस्तद्देतहृशोमुनयइति साम्यवि
वक्षा॥

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः। भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

अत्र चाटुके राजविषया रतिः प्रतीयते तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः ॥ यथा ॥

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर। एवमाशाग्रहग्रस्ताः क्रीडन्ति धनिभिर्बुधाः ॥ अत्रेहीति क्रीडन्ति गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ॥

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण। आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं॥ तस्य तु शृङ्गारस्तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव ॥ अथवा प्राग्यथा कामुक आचरति स्म। तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्वल्यते ॥ उक्तं हि ॥ गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते। प्रधानस्योपकारे हि तथा भूयसि वर्त्तत इति प्राक् प्रतिपादितरूपस्य

रसस्य रसान्तरेण न विरोधः ॥ नाप्यङ्गाङ्गिभ
भवतीति रसशब्देनात्र तत्स्थायिभाव उपलक्ष
॥ ६१ ॥

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तमउल्लास

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह ।
रसस्याङ्गिनो धर्माः शौर्य्यादय इवात्मनः । उत्क
हेतवस्ते स्युरचलस्थितयो गुणाः ॥ आत्मन एव
यथा शौर्य्यादयो नाकारस्य तथा रसस्यैव माधु
दयो गुणा न वर्णानां ॥ क्वचित्तु शौर्य्यादिसमु
स्याकारमहत्त्वादेर्दर्शनादाकार एवास्य शूर इ
देर्व्यवहारादन्यत्राशूरेपि विततावृतित्वमात्रे
शूर इति क्वापि शूरेपि मूर्त्तिलाघवमात्रेणाश
इत्यविश्रान्तप्रतीतयो यथा व्यवहरन्ति । तद्वन्मधु
दिव्यञ्जकसुकुमारवर्णानां माधुर्य्यव्यवहारप्रवृ
रमधुरादिरसाङ्गानां वर्णानां सौकुमार्य्यादि
त्रेण माधुर्य्यादि । मधुरादिरसोपकरणानां तेषां
सौकुमार्य्यादेरमाधुर्य्यादिरसपर्य्यन्तविश्रान्तप्रती
वन्ध्या व्यवहरन्ति ॥ अतएव माधुर्य्यादयो रसधर्मा
समुचितैर्वर्णैर्व्यज्यन्ते । नतु वर्णमात्राश्रयाः । यथै
व्यञ्जकत्वं तथोदाहरिष्यते ॥ उपकुर्व्वन्ति तं स

शेङ्गद्वारेण जातुचित् । हारादिवदलङ्कारास्तेनु प्रासोपमादयः ॥ ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति । ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोप्युपकारका हारादय इवालंकाराः ॥ यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्य्यवसायिनः ॥ क्वचित्तु सन्तमपि नोपकुर्व्वन्ति ॥ यथा क्रममुदाहरणानि ॥

अपसारय घनसारं कुरु हारं दूरएव किं कमलैः । अलमलमालिमृणालैरिति वदति दिवानिशं वाला ॥

इत्यादौ वाचकमुखेन ॥

मनोरागस्तीव्रं विषमिव विसर्प्पत्यविरतं प्रमाथीनिर्धूमं ज्वलति विधुतः पावकइव । हिनस्तिप्रत्यङ्गं ज्वरइववलीयानितइतोन मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ॥

चित्ते विहट्टदि णखुट्टदि सागुणे सुंसेज्जासुलुठदि विसट्टदि दिसुहेसुम् । वोलम्मिवट्टदिपवट्टदिकव्ववन्धेझाणेणतुट्टदि चिरं तरुणीतरट्टी ॥

इत्यादौ वाचकमेव ॥

सिञ्चे क्वापि गतेसरोरुहवने वद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नां पुरः सारसीं । चक्राङ्केन वियोगिना

विलसता नास्वादिता नोज्झिता कण्ठे केवलमर्गलेव निहि[illegible]
जीवस्य निर्गच्छतः ॥

इत्यादौ वाच्यमेव न तु रसं ॥ अत्र विसवता
न जीवं रोद्धुमेति प्रकृताननुगुणोपमा ॥ ए[illegible]
एवच गुणालङ्कारप्रविभागः ॥ एवंसमवायवृत्त्या
शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुण[illegible]
लङ्काराणां भेदः । ओजःप्रभृतीनामनुप्रासोपमाद्
दीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्ड[illegible]
लिकाप्रवाहेणैषां भेद इत्यभिधानमसत् ॥ यदप्युक्तं
काव्यशोभायाः कर्त्तारो धर्म्मा गुणास्तदतिशय[illegible]
हेतवस्त्वलङ्कारा इति ॥ तदपि न युक्तं ॥ यतस्
किं समस्तैर्गुणैः काव्यव्यवहार उत कतिपयैर्वि[illegible]
दि समस्तैस्तत्कथमसमस्तगुणा गौडी पाञ्चाली च
रीतिः काव्यस्यात्मा ॥ अथ कतिपयैस्तत्कथं ततः ॥
अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष
धूम इत्यादावोजःप्रभृतिषु गुणेषु सत्स्वपि न
काव्यव्यवहारः । स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधामित्यादौ
विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्य[illegible]
हारप्रवर्त्तकौ ॥ इदानीं गुणानां भेदमाह ॥

माधुर्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश ॥ एषां
क्रमेण लक्षणमाह ॥ आह्लादकत्वं माधुर्यं शृङ्गारे
द्रुतिकारणं । शृङ्गारेऽर्थात्संभोगे द्रुतिर्गलितत्व
मिव ॥ श्रव्यत्वं पुनरोजःप्रसादयोरपि ॥ करुणे
विप्रलम्भे तच्छान्ते चातिशयान्वितं । अत्यन्तद्रुतिहे
तुत्वात् ॥ दीप्त्यात्मविस्तृतेर्हेतुरोजोवीररसस्थितिः ।
आत्मनस्तस्य विस्तारस्वरूपदीप्तत्वजनकमोजः । वीभत्स
रौद्ररसयोस्तस्याधिक्यं क्रमेण च ॥ वीराद्वीभत्से ततो
रौद्रे सातिशयमोजः । शुष्केन्धनाग्निवत्स्वच्छजल
वत्सहसैव यः । व्याप्नोत्यन्यत्प्रसादोसौ सर्वत्रविहि
तस्थितिः ॥ अन्यदिति व्याप्यमिहचित्तं सर्वत्रेति
सर्वेषु रसेषु सर्वासु रचनासु च । गुणवृत्त्या
पुनस्तेषां वृत्तिःशब्दार्थयोर्मता ॥ गुणवृत्त्या उपचा
रतः । तेषां गुणानां ॥ आकारे शौर्यस्येव ॥ ६९ ॥
...त्येषु ॥ कुतस्त्रयएव न दशेत्याह केचिदन्तर्भव
...नु दोषत्यागात्परे श्रिताः ॥ अन्ये भजन्ति दोषत्वं
...चिन्न ततोदश ॥ बहूनामपि पदानामेकपद
...सनात्मा यः श्लेषोयस्मारोहावरोहक्रमरूपः
...धियोच विकटत्वलक्षणा उदारता यश्चौजो
...ह ॥

मिश्रितशैथिल्यात्माप्रसादश्लेषामोजस्यन्तर्भावः पृथक्पदत्वरूपं माधुर्य्यंभङ्ग्या साक्षादुपात्तं॥ प्र देनार्थव्यक्तिर्हृद्येना मार्गाभेदरूपा समता क हेषः॥ तथाहि॥

मातङ्गाः किमुवल्गितैरित्यादौ॥

सिंहाभिधाने मसृणमार्गत्यागोगुणः॥ कष्ट ग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापार रूपं सौकुमार्य्यमौज्वल्यरूपा कान्तिश्च स्वीकृता एवं नदशशब्दगुणाः॥ पदार्थे वाक्यरचनं वा र्थेच पदाभिधा। प्रौढिर्व्याससमासौ च साभिप्रा त्वमस्य चेति या प्रौढिरोजइत्युक्तं तद्वैचित्र्यमा न गुणस्तदभावेपि काव्यव्यवहारप्रवृत्तेः। अपु र्थत्वाधिकपदत्वानवीकृतत्वामङ्गल रूपाऽश्लील त्यानां निराकरणेनच साभिप्रायत्वरूपमोजोऽर्थ मर्थ्याप्रसाद उक्तिवैचित्र्यरूपंमाधुर्य्यमपारुष्यरू सौकुमार्य्यमग्राम्यत्वरूपा उदारताच स्वीकृतानि अभिधास्यमानस्वभावोक्त्यलङ्कारेणरसध्वनिगु भूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपार्थव्य दीप्तरसत्वरूपा कान्तिश्च स्वीकृता॥ क्रमकौटि नुल्बणत्वोपपत्तियोगरूपघटनात्माश्लेषोपि वि

त्वमात्रं॥ अवैषम्यस्वरूपा समता दोषाभावमात्रं न पुनर्गुणः ॥ कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यद् भिदध्यात् ॥ अर्थस्यायोनेरन्यच्छायायोनेर्व्वायदि न भवति दर्शनं तत्कथं काव्यमित्यर्थदृष्टिरूपः समाधिरपि न गुणः। तेन नार्थगुणाः वाच्याः वाच्या वक्तव्याः प्रोक्ताःशब्दगुणाश्च ये॥ वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ के कस्येत्याह॥ मूर्द्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गारणौ लघू। अवृत्तिर्मध्यवृत्तिर्वामाधुर्य्ये घटना तथा॥ टठडढव र्ज्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ता स्तथा रेफणकारौ ह्रस्वांतरिताविति वर्णाः॥ समासाभावोमध्यमः समासोवेति समासस्तथा माधुर्य्यवतोपदान्तरयोगे रचना माधुर्य्यस्यव्यञ्जिका॥ उदाहरणं॥

अनङ्गरङ्गप्रतिमन्तदङ्गभङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्व्वन्ति यूनां सहसा यथैताःस्वान्तानिशान्तापरचिन्तनानि॥

योगआद्यतृतीयाभ्यामन्त्ययोरेणतुल्ययोः। टादिः शषौवृत्तिदैर्घ्यं गुम्फ उद्धतओजसि ॥ वर्गप्रथमतृतीयाभ्यामन्त्ययोस्तद्द्वितीयचतुर्थयोः रेफेणाधउपर्य्युभयत्र वा यस्य कस्यचित्तुल्ययोस्तेन तस्यैव

सम्बन्धः ॥ टवर्गोऽर्थात् णकारवर्जः । शकारषकारौ दीर्घसमासो विकटा संघटना ओजसः । उदाहरणं ॥

मूर्ध्नामुद्वृत्तकृत्तेत्यादि ॥ ७२ ॥

श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत्
साधारणः समग्राणां स प्रसादो गुणः स्मृतः ॥ सर्वाणां रसानां संघटनानाञ्च । उदाहरणं ॥

परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितं । इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः कृशाङ्ग्याः सन्तापं वदति बिसिनी पत्र शयनं ॥

यद्यपि गुणपरतन्त्राः संघटनादयस्तथापि वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् । रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः ॥ यथा ॥

मन्थायस्तार्णवाम्भः प्लुतिकुहरचलन्मन्दरध्वानधीरः कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः । कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयं ॥

अत्र हि न वाच्यं क्रोधादिव्यञ्जकमभिनेयार्थञ्च काव्यमिति तत्प्रतिकूला उद्धतारचनादयः

वक्ता चात्र भीमसेनः॥ क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः॥ यथा॥

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघातत्रासाक्रुष्टाश्वतिर्य्यग्वलितरविरथेनारुणेनेक्ष्यमाणं। कुर्व्वत्काकुत्स्थवीर्य्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गं॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते॥ तथा ह्याख्यायिकायां शृङ्गारेपि न मसृणवर्णादयः कथायां रौद्रेपि नात्यन्तमुद्धताः॥ नाटकादौ रौद्रेऽपि नदीर्घसमासादयः॥ एवमन्यदप्यौचित्यमनुसर्त्तव्यं॥ इति श्री काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयोनामाष्टम उल्लासः॥

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसराइति। संप्रति शब्दालङ्कारानाह॥ यदुक्तमन्यथावाक्यमन्यथान्येन योज्यते। श्लेषेण काका वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा॥ तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च॥ पदभङ्गश्लेषेण। यथा॥

नारीणामनुकूलमाचरसिचेज्जानासि कश्चेतनोवामानां प्रियमादधासि हि सत्त्वनैवाबलानां भवान्। युक्तं किं हित

कर्त्तनं ननु बलाभावप्रसिद्धात्मनः सामर्थ्यं भवतः पुरन्द्
तच्छेदं विधातुं कुतः ॥

अभङ्गश्लेषेण यथा ॥

अहो केनेदृशी बुद्धिर्दारुणा तवनिर्म्मिता त्रिगुणाश्
बुद्धिर्नतु दारुमयी क्वचित् ॥

काका यथा ॥

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतोगन्तुं। अलि
कोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ॥

वर्णसाम्यमनुप्रासः ॥ स्वरवैसादृश्येपि व्य
सदृशत्वं वर्णसाम्यं ॥ रसाद्यनु गतःप्रकृष्टोन्या
नुप्रासः ॥ छेकवृत्तिगतोद्विधा ॥ छेकाः विदग्ध
वृत्तिर्नियतवर्णगतोरसविषयोव्यापारः ॥ गतः
छेकानुप्रासोवृत्त्यनुप्रासश्च ॥ किन्तयोःस्वरू
त्याह ॥ सोऽनेकस्य सकृत्पूर्व्वः ॥ अनेकस्य अर्थ
व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रा
उदाहरणं ॥

ततोरुणपरिस्पन्दमन्दीकृतवपुः शशी। दध्रे कामपरि
कामिनीगण्ड पाण्डुतां ॥

एकस्याप्यसकृत्परः। एकस्याऽपि शब्दादनेक
व्यञ्जनस्य द्विर्बहुकृत्वोवा सादृश्यं वृत्त्यनुप्रा

माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते । ओजःप्रका
शकैस्तैस्तु परुषा उभयत्रापि प्रागुदाहृतम् ॥
कोमलापरैः ॥ परैः शेषैः ॥ तामेव केचिद्ग्राम्येति
वदन्ति ॥ उदाहरणं ॥

अपसारय घनसारं कुरु हारं दूरएव किं कमलैः । अल
मलमालि मृणालैरिति वदति दिवानिशं बाला ॥

केषाञ्चिदेता वैदर्भीप्रमुखारीतयोमताः ॥ एतास्ति
स्रोवृत्तयोवामनादीनां मते वैदर्भीगौडीपाञ्चा
ल्याख्या रीतयो मताः ॥ शाब्दस्तु लाटानुप्रासोभेदे
तात्पर्य्यमात्रतः ॥ शब्दगतोनुप्रासः । शब्दार्थयो
रभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्चलाटा
नुप्रासः ॥ एष पदानुप्रासइत्यन्ये ॥ पदानां सः ॥
स इति लाटानुप्रासः ॥ उदाहरणं ॥

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥

पदस्यापि ॥ अपिशब्देन सइति समुच्चीयते ॥
उदाहरणं ॥

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः । सुधाकरः
क्व नु पुनः कलङ्कविकलोभवेत् ॥

वृत्तावन्यत्रतत्र वा ॥ नाम्नः स वृत्त्यवृत्त्योश्च ॥

एकस्मिन्समासे भिन्ने वासमासे समासासम
योर्वा। नाम्नः प्रातिपदिकस्य नतु पदस्य सात्
उदाहरणं ॥

सितकरकररुचिरविभा विभाकराकारधरणिधरकी
र्त्तिः पौरुषकमलाकमला सापि तथैवास्ति नान्यस्य ॥ तदेवं
घामतः ॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रु
यमकम् ॥ समरसमरसोयमित्यादावेकेषामर्थ
अन्येषामनर्थवत्त्वे भिन्नार्थानामिति न युज्यते
मित्यर्थे सतीत्युक्तं ॥ सेतिसरोरस इत्यादि
ण्येन तेनैव क्रमेण स्थिता॥ पादतद्भागवृत्ति
त्यनेकतां ॥ प्रथमाद्वितीयादौ द्वितीयस्तृतीय
तृतीयश्चतुर्थे प्रथमस्त्रिष्वपीति सप्त ॥ प्रथमो
येतृतीयश्चतुर्थेइति ॥ प्रथमश्चतुर्थे द्वितीयस्तृ
इति द्वे ॥ तदेवं पादजं नवभेदं ॥ अर्द्धावृ
श्लोकावृत्तिश्चेति द्वे ॥ द्विधाविभक्ते पादे प्र
पादादिभागः पूर्व्ववत् । द्वितीयतृतीयादिप
दिभागेष्वंतभागोन्तभागेष्विति विंशति भेदा
श्लोकान्तरे हि नासौभागावृत्तिः। त्रिखण्डे त्रिंश
खण्डेचत्वारिंशत् ॥ प्रथमपादादिगतान्त्यार्द्ध

भागोद्वितीयपादादिगते आद्यार्द्धादिभागे यथ्यत इत्याद्यन्वर्थतानुसरणेनानेकभेदमन्तादिकमाद्यन्तिकं तत्समुच्चयः मध्यादिकमादिमध्यमन्तमध्यं मध्यान्तिकं तेषां समुच्चयः तथा तस्मिन्नेव पादेआद्यादिभागानां मध्यादिभागेष्वनियतेवस्थाने आवृत्तिरिति प्रभूततमभेदं ॥ तदेतत्काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतं ॥ दिङ्मात्रमुदाह्रियते ॥

सन्नारीभरणोमायमाराध्य विधुशेखरं । सन्नारीभरणोमायस्ततस्त्वं पृथिवीं जय ॥ विनायमेनोनयता सुखादिना विनायमेनोऽनयता सुखादिना । महाजनोदीयतमानसादरं महाजनोदीयतमानसादरं ॥ सलाऽरभरतोवश्यमवलम्बित तारवं । सर्व्वदारणमानैषीदावानलसमस्थितः । सपुनरास्तं लोकः ॥ अनन्तमहिमव्याप्तविश्वावेधानवेदयां । या च मातेव भजते प्रणते मानवे दयां ॥ यदानतोयदानतोनयात्ययं नयात्ययं । शिवेहितां शिवेहितां स्मरामि तां स्मरामि तां ॥ समुचययमकं । सरस्वतिप्रसादं मे स्थितिचित्तसरस्वति । सरस्वति कुरुक्षेत्र कुरुक्षेत्रसरस्वति ॥ ससार साकन्दर्पेण कन्दर्पेण ससार सा । शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा ॥ मधु

बराजि पराजितमानिनी जनमनःसुमनःसुरभिश्रियं।
वारित वारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत्॥

एवंवैचित्र्यसहस्रैःस्थितमन्यदुन्नेयं॥ वाच्यभे
भिन्ना यद्युगपद्भाषणस्पृशः॥ श्लिष्यन्ति श
श्लेषोसावक्षरादिभिरष्टधा॥ अर्थभेदेन शब्दा
इति दर्शने काव्यमार्गे स्वरोन गण्यतइति च
वाच्यभेदेन भिन्ना अपि शब्दा यद्युगपदुच्चार
श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः॥
वर्णपादलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचना
भेदादष्टधा॥ क्रमेणोदाहरणं॥

अलङ्कारः शङ्काकरनरकपालंपरिजनोविशीर्णाङ्ग
वसुचव्षएकोवङ्कवयाः। अवस्थेयं स्थाणोरपि भवति
मरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी॥ पृथु
खरपात्रं भूषितनिःशेषपरिजनं देव। विलसत्करेणु
संप्रति सममावयोः सदनं॥ भक्तिप्रह्वविलोकनप्रणयिनी
त्पलस्पर्द्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्रा
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः॥

एष वचनश्लेषोपि॥

महदे सुरसन्धम्मेतमवसमासङ्गमागमाहरणे। हर

र्षं चित्तमोहमवसरउमे सहसा ॥ अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषुच वक्ष्यति । सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः ॥ रजनिरमणमौलेः पादपद्मावलोकक्षणसमयपराप्तापूर्व्वसम्पत्सहस्रं । प्रथमनिबहमध्ये जातु चित्तप्रसादादहमुचितरुचिः स्यां नन्दितासातथामे ॥ सर्व्वस्वं हर सर्व्वस्यत्वं भवच्छेदतत्परः । नयोपकारसांमुख्य मायासि तनुवर्त्तनं ॥

भेदाभावात्प्रकृत्यादेर्भेदोपि नवमोभवेत् ॥ नवमोपीत्यपिर्भिन्नक्रमः ॥ उदाहरणं ॥

योसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः । शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥

अत्र प्रकरणादिनियमाभावाद्द्वावप्यर्थौ वाच्यौ ॥ ननु स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्य्याणां तदभावादभिन्नप्रयत्नोच्चार्य्याणाञ्च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोर्थश्लेषश्चेति द्विविधोप्यर्थालंकारमध्ये गणितोन्यैरिति कथमयं शब्दालङ्कारः ॥ उच्यते ॥ इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन योविभागः सान्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते ॥ तथाहि ॥ कष्टत्वादिगाढत्वाद्यनुप्रासादयोव्यर्थत्वादि प्रौढ्याद्युपमादयस्तद्भावतद्भावानुविधायित्वादेव शब्दार्थगतत्वेन

व्यवस्थाप्यन्ते ॥ स्वयञ्च पल्लवाताम्रभास्वत्करि
जिते त्वभङ्गः शब्दश्लेषः । प्रभातसन्ध्येवास्वापफ
श्लेषितप्रदेति सभङ्गः शब्दश्लेषश्चेति द्वावपि शब्दै
समाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नं न
स्यार्थश्लेषत्वं। अर्थश्लेषस्य तु स विषयः । यत्र
परिवर्त्तनेपि न श्लेषत्वखण्डना ॥

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिं । अहो
शीवृत्तिस्तुलाकोटेः खलस्य च ॥

नचायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषोपितु
प्रतिभोत्पत्ति हेतु रुपमा ॥ तथाहि । यथा ॥
मिव मुखं मनोज्ञमेतत्कचतितरामित्यादौ
साम्ये क्रियासाम्ये उभयसाम्येवा उपमा ॥ त
सकलकलं पुरमेतज्जातं संप्रति सितांशुबिम्ब
त्यादिशब्दमात्र साम्येपि सा युक्तैव ॥ तथा
रुद्रटेन॥ स्फुटमर्थालंकारावेतावुपमासमु
किं तु आश्रित्यशब्दमात्रं सामान्यमिहापि स
इति ॥ नच कमलमिव मुखमित्यादिः साध
धर्म्मप्रयोगशून्यउपमाविषय इति वक्तुं युक्तं॥
पमायानिर्विषयत्वापत्तेः॥

देव त्वमेव पातालमाशानां त्वं निबन्धनं। त्वं चामरम रुद्भूमिरेको लोकत्रयात्मकः॥

इत्यादिःश्लेषस्य चोपमाद्यलङ्कारविविक्तोस्ति विषय इति द्वयोर्योगे सङ्कर एव॥ उपपत्तिपर्य्या लोचने तु उपमाया एवायं युक्तोविषयः अन्यथा विषयापहारएवपूर्णोपमायाः स्यात्॥ नच अविन्दु सुन्दरी नित्यं गलल्लावण्यविन्दुकेत्यादौ विरोध प्रतिभोत्पत्तिहेतुः श्लेषोपि तु श्लेषप्रतिभोत्पत्तिहेतु र्विरोधः॥ नह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषोद्विती यार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात्॥ नच विरोधाभासइव विरोधः। श्लेषाभासः श्लेषस्त द्देवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारा न्तरमेव॥ तथा च॥

सद्वंशमुक्तामणिः नान्यः कविरिव लब्धश्लोकोदेवमहान् भवान्॥ अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः। अहो दैव गतिश्चित्रा तथापि न समागमः॥ आदाय चापमचलं कृत्वा हीनं गुणं विषमदृष्टिः। यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नम स्तस्मै॥

इत्यादा वेकदेशविवर्त्तिरूपकश्लेषव्यतिरेक समासोक्तिविरोधत्वमुचितं॥ नतु श्लेषत्वं शब्दश्लेष

ध्वनिचोच्यते ॥ अर्थालङ्कारमध्ये च भास्वत्करो कोयं नयः ॥ किञ्च वैचित्र्यमलङ्कार ...पफ कविप्रतिभा संरम्भगोचरस्तत्रैव विचित्रतेति स लङ्कारभूमिः ॥ अर्थमुखप्रेक्षितत्वमेतेषां शब्दा मिति चेदनुप्रासादीनामपि तथैवेति तेषा लङ्काराः किं नोच्यन्ते ॥ रसादिव्यञ्जकस्वरूपवा विशेषसव्यपेक्षत्वेपि ह्यनुप्रासादीनामलङ्कारत शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता।अ गुणदोषालंकाराणां शब्दापेक्षयैव व्यवस्थितिरि तेपि शब्दगतत्वेनोच्यन्ताम्॥ विधौ वक्रे मूर्ध्नि दौच वर्णादिश्लेषे एकप्रयत्नोच्चार्यत्वेऽर्थश्ले शब्दभेदेपि प्रसज्यतामित्येवमादिस्वयं विचार्य तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता॥ स वेशविशेषेण यत्र न्यस्तावर्णाः खड्गमुरजपद्मा कारमुल्लासयन्ति तच्चित्रं काव्यं॥ कष्टंकाव्य दिति दिङ्मात्रं प्रदर्श्यते॥ उदाहरणं॥

मारारिशक्ररामेभमुखैरासाररंहसा। सारारब्ध नित्यं तदर्त्तिहरणक्षमा॥ माता नतानां सङ्घट्टः श्रियां बा तसंभ्रमा। मान्याथ सीमा रामाणां शं मे दिश्यादुमादिम खड्गबन्धः॥ सरलावहलारम्भतरलालिबलारवा। वार

देव त्वमेव पा खावऊखामखा ॥ मुरजबन्धः ॥ भासते
ककुमिरेको रघाभाताहताविभा । भाविताऽऽत्मा शुभावादे
वालावत ते सभा ॥ पद्मः ॥ रसासाररसासारसायताक्षक्ष
तायसा । साता वाततवातासा रक्षतस्वस्वतक्षर ॥ सर्वतो
भद्रं ॥

सम्भविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते ॥ पुनरुक्तवदाभासो विभिन्नाकारशब्दगा । एकार्थतेव भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं पुनरुक्तवदाभासः ॥ स च । शब्दस्य सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः ॥ उदाहरणं ॥

अरिवधदेहशरीरः सहसा रथिसूततुरगपादातः । भाति सदान त्यागः स्थिरतायामवनितलतिलकः ॥ चकासत्यङ्गनारामाः कौतुकानन्दहेतवः । तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः ॥

तथा शब्दार्थयोरयं । उदाहरणं ॥

तनुवपुरजघन्योऽसौ करिकुञ्जर रुधिररक्तखरनखरः ।
तेजोधाम महः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥

अनेकस्मिन् पदे परिवर्त्तिते नालङ्कार इति शब्दाश्रयोऽयं एकस्मिंस्तु परिवर्त्तितेऽपि स न हीयत

इत्यर्थनिष्ठइत्युभयालङ्कारोयं ॥ इतिकाव्यप्र
मम्मटाचार्य्यविरचिते शब्दालङ्कारनिर्णयो
नवमउल्लासः॥

अर्थालङ्कारानाह॥ साधर्म्यमुपमा भेदे॥
मानोपमेययोरेव नकार्य्यकारणादिकयोः साध
भवतीति तयोरेव समानधर्म्मेण सम्बन्धउप
भेदग्रहणमनन्वयव्यवच्छेदाय पूर्णा लुप्ता च उप
नोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपा
पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता॥
श्रिमा श्रौत्यार्थीच भवेद्वाक्ये समासे तद्धिते त
श्रिमापूर्णा॥ यथेववाशब्दायत्परास्तस्यैवोप
ताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते त
शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रति
यन्तीति तत्सद्भावे श्रौती उपमा॥ तथैव तत्र
वेत्यनेनेवार्थे विहितस्य वतेरुपादाने। तेन त
क्रियाचेद्वतिरित्यादावुपमेय एव ॥ तत्तुल्य
त्यादौ चोपमानएव ॥ इदञ्चतच्च तुल्यमि
भयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साध
र्म्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थ

त्वात्तुल्यादिपदोपादाने आर्थी । तद्वत्तेन तुल्य मित्यादिना विहितस्य वतेः स्थितौ ॥ इवेन नित्य समासोविभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वं चेति नित्यसमासे इवशब्दयोगे समासगा । क्रमेणोदा हरणं ॥

स्वप्नेषु समरेषु त्वां विजयश्रीर्न मुञ्चति । प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारकान्तिः । सरसिजमिदमाननञ्च तस्याः सममिति चेतसि संमदं विधत्ते ॥ अत्यायतैर्नियमकारिभि रुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः । शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥ अवि तथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः । सुरतरुसदृशः सभवानभिलषणीयः क्षितीश्वरेन कस्य ॥ गाम्भीर्य्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् । दुरालोकः स समरे निदाघाम्बर रत्नवत् ॥

स्वाधीनपतिका कान्तं भजमाना यथा लोको त्तरचमत्कारभूस्तथाजयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तो वैचित्र्यं ॥ वैचित्र्य चालङ्कारस्तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारो र्थेन खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीति

रपि तु वाच्यवैचित्र्यप्रतिभासादेव। रसादि
व्यङ्ग्योऽर्थोऽलंकारान्तरञ्च सर्व्वत्राव्यभिचारी
त्ययित्वैव तदलङ्कारा उदाहृताः ॥ तद्रहितां
तूदाहृियप्रमाणाविरसतामावहन्तीति पूर्वं
विरुद्धाभिधानमिति न चोदनीयं॥ तद्द्वर्मस्य
स्यान्नश्रौती तद्धिते पुनः। धर्म्मः साधारणः
कल्पबादौ चार्थ्येव॥ तेन पञ्च॥ उदाहरणं॥

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः। करणी
स्रोतः सत्यंतस्यामृतं यथा ॥ आकृष्टकरवालोसौ स
परिभ्रमन्। प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः
वाल इवाचारस्तस्य वागमृतोपमा। विषकल्पं मनं
यदिजीवसि तत्सखे॥

उपमानानुपादाने वाक्यगाऽथ समास
सअलकरणपरवीसा मसिरिविअरणं सरसकव्वस
इअहवणसुअइसरिसंअंसंसमेत्तेण॥

कव्वस्येत्यत्र कव्वसममिति सरिसमित्यत्र च
मिति पाठे एषैव समासगा॥ वादेर्लोपे स
सा कर्माधारक्यचिक्यङि। कर्मकर्त्रोर्णमुलि॥
ब्द उपमाद्योतकइति वादेरुपमाप्रतिपाद
लोपेषट्समासेकर्मणोऽधिकरणाच्चोत्पन्नेन क

कर्त्तरिक्यङाच कर्मकर्त्रोरुपपदयोर्णमुलाचभवेत्।

उदाहरणं ॥

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना। नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ तथा ॥ असितभुजगभीषणासिपत्रोरुहिरुहिकाहितचित्ततूर्णचारः। पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेयमासीत् ॥ पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुञ्चुः। नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥ मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे। स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः ॥

एतद्विलोपे क्विप्समासगा एतयोर्धर्मवाद्योः ॥

उदाहरणं ॥

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः। यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ परिपन्थिमनोराज्यशतैरपि दुराक्रमः। संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥

धर्मोपमानयोर्लोपे वृत्तौ वाक्येच दृश्यते ॥

ढुण्ढोल्लन्तोमरिहिसि कण्टअ कलिआइंकेअइवणाइं। मालइकुसुमसरिच्छं भमरभमन्तोण पाविहिसि ॥

कुसुमेव समिति पाठे वाक्यगा क्वचि वा
सेवासे। आनेनिरासे॥

अरातिविक्रमालोकविकस्वरविलोचनः। कृपाणोद
ग्रदोर्दण्डः स सहस्रायुधीयति॥

अत्रात्मा उपमेयः। त्रिलोपे च समासा
त्रयाणां वादिधर्मोपमानानां॥ उदाहरणं॥

तरुणिमनिकृतावलोकनाललितविलासविलब्धविभ्र
मस्मरविसराचितान्तरा मृगनयना हरते मुनेर्मनः॥

अत्र सप्तम्युपमाने इत्यादिना यदासा
लोपौ भवतस्तदोदाहरणं॥

क्रूरस्याचारस्यायः शूलतयाध्यवसायात्। अयःशू
न्विच्छतीत्यायः शूलिकः॥

इत्यतिशयोक्तिर्नतु क्रूराचारोपमेयतैक्ष्ण
वादीनां लोपे त्रिलोपियमुपमा। एवमेकोनविं
शतिः पूर्णाभिःसह पञ्चविंशतिः॥

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता। मम्लौसाथ
देन पद्मिनीव हिमाम्भसा॥

इत्यभिन्ने साधारणे धर्मे॥

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणं। प्रभुतेव
कृष्टसर्वलोका नितम्बिनी॥

इति भिन्ने च तस्मिन्नेकस्यैव बहूपमानोपादाने मालोपमा ॥ यथोत्तरमुपमेयस्योपमानत्वे पूर्ववद् भिन्नाभिन्नधर्म्मत्वे ॥

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थततेः ।
भणितिरिव मतिर्मतिरिव चेष्टाचेष्टेव कीर्त्तिरतिविमला ॥
मतिरिव मूर्त्तिर्मधुरामूर्त्तिरिव सभाप्रभावचिता । तस्य सभेव
जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥

इत्यादिका रशनोपमा च न लक्षिता एवम्विध वैचित्र्यसहस्रसम्भवात् ॥ उक्तभेदानतिक्रमाच्च ॥

उपमानोपमेयत्वे एकस्यैवैकवाक्यगे । अनन्वयः ।

उपमानान्तरसम्बन्धाभावोऽनन्वयः । उदाहरणं ॥

नकेवलं भाति नितान्तकान्तिर्नितम्बिनीसैव नितम्बिनीव ।
यावद्विलासायुधलास्यवासास्तेतद्विलासा इव तद्विलासाः ॥

विपर्य्यास उपमेयोपमानयोः ॥ तयोरुपमानोपमेययोः परिवृत्तिरर्थाद्वाक्यद्वये इतरोपमानव्यवच्छेदपरा उपमेयेनोपमा इत्युपमेयोपमा । उदाहरणं ॥

कमलेव मतिर्मतिरिव कमला तनुरिवविभाविभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥

सम्भावनमथोत्प्रेक्षाप्रकृतस्य समेन यत् ॥

नोपमानेन ॥ उदाहरणं ॥

उन्मेषं यो मम न सहते जातिवैरी निशायामिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्य्यदर्पः । नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षाल्लग्नामन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम् ॥
ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥
भेदोक्तौ ॥ यथा ॥

अयं मार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्व्वाः प्रसरति दिशो नैष नियतम् । कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥

भेदोक्ताविति अनेन न केवलमयं निश्चयगर्भो यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः ॥ यथा ॥

इन्दुः किं क कलङ्कः सरसिजमेतत् किमम्बु कुत्र गतं । ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयते इति उपेक्षितो भट्टोद्भटेन । तदनुक्तौ ॥ यथा ॥

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः। वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥

तद्रूपकमभेदो य उपमानोपमेययोः॥ अतिसाम्यादनपह्नुतभेदयोरभेदः समस्तवस्तुविषयम्॥ श्रौता आरोपिता यदा आरोपविषया इवारोप्यमाणा यदा शब्दोपात्तास्तदा समस्तानि वस्तूनि विषयोस्येति समस्तवस्तुविषयं आरोपिता इति बहुवचनमविवक्षितम्॥ यथा॥

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्। द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन॥

अत्र पादत्रयमन्तर्धानरसिकत्वमारोपितधर्म्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्य्या॥ अथवा न्यस्तं लाञ्छनमञ्जनं कुमुदिनीप्रोल्लासरससिद्धिप्रदमिति चतुर्थः पाद एवं रूपकेणैव निर्व्वाहः॥ श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत्। केचिदारोप्यमाणाः शब्दो

पाचाः केचिदर्थसामर्थ्यादवसेया इत्येकदेश
र्त्तनादेकदेशविवर्त्ति ॥ यथा ॥

जस्सरणंते उरएकरे कणंतस्स मण्डलग्गलश्रं।
सुद्दी विसद्दला परम्मुहोद्दीदूरिउसेणा ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोप
मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च
नायिकात्वमर्थसामर्थ्यादवसीयते इत्येकदेश
षेण वर्त्तनादेकदेशविवर्त्ति। साङ्गमेतत्
द्विभेदं सावयवं निरङ्गन्तु शुद्धं ॥ यथा ॥

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं
दन्तं श्रुतमपि पुनः प्रश्नयति यत्। अनिद्रं यच्चान्तः
तदहो वेद्मभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसि जः प्रे
काम् ॥

माला तु पूर्व्ववत्। मालोपमायामिवैक
इव आरोपिताः ॥ यथा ॥

सौन्दर्य्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कार्मणकर्म्मनर्म्मरहसामुल्लासनावासभूः। विद्यावक्रगिरां
रनवधिप्रावीण्यसाचात्क्रियाबाणाः पञ्च शिलीमुखस्य
चूडामणिः सा प्रिया ॥

नियतारोपणोपायः स्यादारोपः परस्य यः।
तत्परं परितं श्लिष्टे वाचके भेदभाजि वा॥ यथा॥

विद्वन्मानसहंसवैरिकमलासङ्कोचदीप्तद्युते दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर। सत्यप्रीतिविधानदक्षविजयप्राग्भावभीमप्रभो साम्राज्यं वरवीरवत्सरशतं वैरिञ्च्यमुच्चैः क्रियाः॥

अत्र मानसमेव मानसम्। कमलायाः सङ्कोच एव कमलानामसङ्कोचः दुर्गाणाममार्गणमेवदुर्गायामार्गणं समितां स्वीकारएव समिधांस्वीकारः सत्येप्रीतिरेवसत्यामप्रीतिः। विजयः पराभवएव विजयोर्जुनः एवमारोपणनिमित्तो हंसादेरारोपः। यद्यपि शब्दार्थालङ्कारोयमित्युक्तं वक्ष्यते च तथापि प्रसिद्ध्यनुरोधादत्रोक्तः। एकदेशविवर्त्तिहीदमन्यैरप्यभिधीयते। भेदभाजि यथा॥

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः। संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो राजन् राजति वीरवैरिवनितावैधव्यदस्ते करः॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वे
रोपे करस्यांवानलत्वाद्यारोपो युज्यते ॥

अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते दे
मुक्तारत्नं न कैर्भवान् ॥ निरवधि च निराश्रयञ्च यस्य
मनिवर्त्तितकौतुकप्रपञ्चं प्रथम इह भवान्स कूर्ममूर्त्तिर्नाि
चतुर्दशलोकवल्लिकन्दः ॥

इति च मालारूपकमपि परम्परितं द्रष्टव्यम्
किसलयकरैर्लतानां करकमलैः कामिनां मनो
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥

इत्यादिरशनारूपकं नवैचित्र्यवदिति न
तम् ॥ प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुति
उपमेयमसत्यं कृत्वोपमानं सत्यतया यत्स्थापनं
त्वपह्नुतिः ॥ उदाहरणं ॥

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलङ्को
विलसति शशाङ्कस्य वपुषि । अमुष्येयं मन्ये विगलदमृ
शिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि । इति
वत सखि कियदेतत्पश्य वैरं स्मरस्य प्रियविरहकृशां
रागिलोके तथाहि । उपवनसहकारोद्भासिभृङ्गच्छले
विशिखमनेनोट्टङ्कितं कालकूटम् ॥

अत्र हि न सभृङ्गाणि सहकाराण्यपि तु स कालकूटाः शरा इति प्रतीतिः एवं वा॥

अमुष्मिल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखाधूमस्येयं परिणमति रोमावलिवपुः ॥

अत्र न रोमावलिर्धूमशिखेयमिति प्रतिपत्तिः॥ एवमियं भङ्ग्यन्तरैरप्यूह्या। श्लेषः सवाक्य एकस्मिन्यत्रानेकार्थता भवेत्। एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स श्लेषः। उदाहरणं॥

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां नयति निधनं निद्रामुद्रां प्रवर्त्तयति क्रियाः। रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनं बत बत लसत्तेजः पुञ्जोविभाति विभाकरः॥

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ ॥ परोक्तिर्भेदकैः श्लिष्टैस्समासोक्तिः प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यान्नतु विशेष्यस्य सामर्थ्यादपि यदप्रकृतस्यार्थस्याभिधानं सा समासोक्तिः॥ उदाहरणं॥

लहिऊणतुज्झबाहुप्फंसं जीए सकोवि उल्लासो। जअलच्छी तुह विरहेणहुज्जला दुब्बलाणं सा॥

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाच
नास्ति। निदर्शना। अभवन् वस्तुसम्बन्ध उप
रिकल्पकः। निदर्शनं दृष्टान्तकरणम्। उदा

क्व सूर्य्यप्रभवोवंशः क्वचाल्पविषया मतिः। तितीर्षु
र्मोहादुडुपेनास्मि सागरम्॥

अत्र उडुपेन सागरतरणमिव मन्मत्या
वंशवर्णनमित्युपमायां पर्य्यवस्यति॥ यथा वा॥

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिम
याति चास्तम्। वहति गिरिरयं विलम्बिघण्टाद्वय
रितवारणेन्द्रलीलाम्॥

अत्र कथमन्यस्य लीलामन्योवहतीति त
मित्युपमायां पर्य्यवसानं॥

दोर्भ्यां तितीर्षति तरङ्गवती भुजङ्गमादातुमिच्छ
हरिणाङ्कबिम्बम्। मेरुं लिलङ्घयिषति ध्रुवमेष देव यत्ते
गदितुमुद्यममादधाति॥

इत्यादौ मालारूपाप्येषा द्रष्टव्या॥ स्वस्वहेत
स्योक्तिः क्रिययैव च सा परा। क्रिययैव स्वस्व
कारणयोः सम्बन्धोयदवगम्यते सा परा
र्शना॥ यथा॥

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवं। शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः॥

अत्र पातक्रियया पतनस्य लाघवे सति उन्नतपदप्राप्तिरूपस्य कारणस्य च सम्बन्धः ख्याप्यते। अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया। अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा। कार्य्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति। तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा। तदन्यस्य कारणादेः क्रमेणोदाहरणं॥

याता किन्न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते नो कार्य्या नितरांकृशासि कथयत्येवं सवाष्पेमयि। लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः॥

अत्र प्रस्थानात्किमिति निवृत्तोसीति कार्य्ये पृष्टे कारणमभिहितम्॥

राजन् राजसुता न पाठयति मां देव्योपि तूष्णींस्थिताः कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते। इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जराच्चित्रस्थानवलोक्यशून्यवलभावेकैकमाभाषते॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त
रयः पलाय्य गता इति कारणे प्रस्तुते कार्य्यमुक्तं
एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो यन्
मणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि । अङ्गुल्य
क्रियाप्रविलयिन्यादीयमाने शनैः कुत्रोड्डीयगतोममेत्यनु
निद्राति नान्तः शुचा ॥

अत्रास्थाने जडानां ममत्वसंभावना भवती
सामान्ये प्रस्तुते विशेषः कथितः ॥

सुहृद्वधूवाष्पजलप्रमार्ज्जनं करोति वैरप्रतियातनेन
स एव पूज्यः सपुमान्सनीतिमान्सुजीवनं तस्य सभाजनं नि

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दु
अशमयसि तत्त्वमेव श्लाघ्यइति विशेषे प्रकृते सा
न्यमुदितं। तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रका
श्लेषः समासोक्तिः सादृश्यमात्रं वा तुल्यात्तुल
ल्याक्षेपे हेतुः ॥ क्रमेणोदाहरणं ॥

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोपि यायाद्यदि प्रण
महानपि स्यात् । अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केन
दिक् प्रकटिता पुरुषोत्तमेन ॥ येनास्यभ्युदितेन चन्द्रगा
क्रान्तिं रवौ तत्र ते युज्येत प्रतिकर्त्तुमेव न पुनस्तस्यैव पादग्र
चीर्णेनैतदनुष्ठितं यदि ततः किं लज्जसे नोमनागस्त्वेवं

धामतातु भवतोयद्योऽग्नि विस्फुर्ज्जसे॥ आदाय वारिपरितः सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन। क्षारीकृतं च वडवादहने हुतञ्च पातालकुक्षिकुहरे विनिवेशितञ्च॥

इयञ्च काचिद्वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति॥ यथा॥

अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः पोतोपाया इह हि बहवो लङ्घनेपि क्षमन्ते। आहोरिक्तः कथमपि भवेदेष दैवात्तदानीं कोनामस्यादवटकुहरालोकनेप्यस्य कल्पः॥

काचिदध्यारोपेणैव यथा॥

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते नच्छायापि परोपकारकरणी मार्गस्थितस्यापि मे॥

कचित्त्वंशेषाध्यारोपेण॥ यथा॥

सोपूर्वो रसनाविपर्य्ययविधिस्तत्कर्णयोश्चापलं दृष्टिःसा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा। सर्वं विस्मृतवानसि भ्रमरहे यद्वारणोद्याप्यसा वन्तः शून्यकरोनिषेव्यत इति भ्रातः कणग्रहः॥

अत्र रसनाविपर्य्यासः शून्यकरत्वञ्च भ्रमरस्यासेवने न हेतुः कर्णचापलन्तु हेतुः। मदःप्रत्युत

सेवने निमित्तं । निगीर्य्याध्यवसानन्तु प्रकृ
परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ
कल्पनं । कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्
विज्ञेयातिशयोक्तिः सा । उपमानेनान्तर्निगी
पमेयस्य यदध्यवसानं सैका ॥ यथा ॥

कमलमनम्भसि कमले च कुवलये तानि कनक
याम् । सा च सुकुमारसुभगेत्युत्पातपरं पराकेयं ॥

अत्र मुखादिकमलादिरूपतयाध्यव
यच्च तदेवान्यत्वेनाध्यवसीयते सा परा ॥ यथ

अरलंलउहत्तणअं अरणा विअ कादूवत्तणछाआ ॥
सामलपआ वहूणा रेहघिअणहोइ ॥

यद्यर्थस्य यदिशब्देन चेच्छब्देन वा उक्तौ
ल्पनमर्थादसंभविनोर्थस्य सा तृतीया ॥ यथा ।

राकायामकलङ्कंचेदमृतांशोर्भवेद्वपुः । तस्यामुख
साम्यपराभवमवाप्नुयात् ॥

कारणस्य शीघ्रकारितां वक्तुं कार्य्यस्
मुक्तौ चतुर्थी ॥ यथा ॥

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
रमणीवल्लभलोचनविषयं त्वया भजता ॥

प्रतिवस्तूपमा तु सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ॥ साधारणोधर्म्म उपमेयवाक्ये चोपमानवाक्ये च कथितपदत्वस्य दुष्टतयाऽभिहितत्वाच्छब्दभेदेन यदुपादीयते सा वस्तुनोवाक्यार्थस्योपमानत्वात्प्रतिवस्तूपमा यथा ॥

देवीभावङ्गमिता परिवारपदंकथं भजत्येषा। न खलु परिभोगयोग्यन्दैवतरूपाङ्कितं रत्नं। यदिदहत्यनलोत्रकिमद्भुतं यदिचगौरवमद्रिषु किं ततः। लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥

इत्यादिमालाप्रतिवस्तूपमा द्रष्टव्या एवमन्यत्राप्यनुसर्त्तव्यम् दृष्टान्तःपुनरेतेषां सर्व्वेषां प्रतिविम्बनं एतेषां साधारणधर्म्मादीनां दृष्टोन्तःनिश्चयो यत्र स दृष्टान्तः ॥

त्वयि दृष्टएव तस्यानिर्वाति मनोमनोभवज्वलितम्। आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥

एष साधर्म्येण वैधर्म्येणतु।

तवाहवे साहसकर्म्मशर्म्मणः करं कृपाणान्तिकमानिनीषतः। भट्टाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥

न

सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मना
सैव क्रियासु बह्वीषु कारकस्येति दीपकं।प्राक
कानामर्थादुपमानोपमेयानां धर्म्मः क्रियादि
वारमेव यदुपादीयते तदेकस्यैव समस्तवाक्य
नाद्दीपकं॥ यथा॥

किवणाणंधणाणा आणंकणमत्तीकेसरादूंसीहाणम्।
वाखिआणंयणा कुत्तोघिप्पन्ति अमुआणं॥

कारकस्य च बह्वीषु क्रियासु सकृद्वृ
पकं॥ यथा॥

खिद्यति कूणति वेल्लति विवलति निमिषति विलो
तिर्यक्। अन्तर्नन्दति चुम्बितुमिच्छति नवपरिण
शयने॥

मालादीपकमाद्यञ्चे द्यथोत्तरगुणावहां पू
पूर्व्वेणवस्तुनोत्तरमुत्तरं चेदुपक्रियते त
दीपकं॥ यथा॥

संग्रा...क्रमसागतेन भवता चापे समारोपिते देवा
येन येन सहसायद्यत्समासादितं। कोदण्डेन शराः श
शिरस्तेनापि भूमण्डलन्तेन त्वं भवता चकीर्त्तिरतुला
चलोकत्रयं॥

नियतानां सकृद्धर्मः सापुनस्तुल्ययोगिता। नियतानां प्राकरणिकानामेवाप्राकरणिकानामेव वा ॥ क्रमेणोदाहरणं॥

पाण्डुक्षामं वदनं हृदयं सरसं तवालसञ्च वपुः। आवेदयति नितान्तं क्षेत्रियरोगं सखिहृदन्तः॥ कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का। अमृतममृतरश्मिरम्बुजन्मप्रतिहतमेकपदे तवाननस्य॥

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः। अन्यस्योपमेयस्य व्यतिरेकआधिक्यं॥ यथा॥

क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते सत्यं। विरम प्रसीद सुन्दरि यौवनमनिवर्त्तियातन्तु॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केनचिदुक्तन्तदयुक्तं अत्र यौवनगतास्थैर्य्यस्याधिक्यं हि विवक्षितं हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते। शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत्त्रिरष्ट तत्। व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षकारणं तयोर्द्वयोरुक्तिः। एकतरस्य द्वयोर्वानुक्तिरित्यनुक्तित्रयं एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते। अर्थेन च

क्रमेणोक्तौ चत्वारएव भेदाः। आक्षिप्ते चै तावन्तएव। एवं द्वादश एते श्लेषेपि भवन्तीति विंशतिर्भेदाः। क्रमेणोदाहरणं॥

असि मात्रसहायस्य प्रभूतारिपराभवे। अन्यतु स्येव न स्मयोऽस्य महाधृतेः॥

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादानेऽन्यभेदत्रयं। एवमन्ये द्रष्टव्यं। अत्रेवशब्दस्य सद्भावाच्छाब्दमौपम्यं।

असिमात्रसहायोपि प्रभूतारिपराभवे। नैवान्यतुच्छवत्सगर्वोयं धृतेर्निधिः॥

तुल्यार्थे वतिरित्यार्थमौपम्यं॥

इयं सुनयना दासीकृततामरसश्रिया। आननेनाकलङ्केन जयतीन्दुं कलङ्कितं॥

अत्रेवादितुल्यादि पद विरहे आक्षेपोपमा॥

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः। अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥

अत्रेवार्थे वतिः। गुणशब्दः श्लिष्टः। शाब्दमौपम्यं।

अखण्डमण्डलः श्रीमान्पश्यैष पृथिवीपतिः। न निशाकरवज्जातु कलावैकल्यमागतः॥

अत्र तुल्यार्थे वतिः । कलाशब्दः श्लिष्टः माला प्रतिवस्तूपमावन्मालाव्यतिरेकोपि सम्भवति तस्यापि भेदा एवमूह्याः दिङ्मात्रञ्चोदाह्रियते । यथा ॥

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः । रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि ॥

अत्र तुल्यार्थे वतिः । विषमादयश्च शब्दाः श्लिष्टाः ॥

नित्योदितप्रतापेन त्रियामामीलितप्रभः । भास्वतानेन भूपेन भास्वानेष विनिर्ज्जितः ॥

अत्र ह्याक्षिप्तैवोपमा । भास्वतेति श्लिष्टः ॥ यथा वा ॥

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं बिम्बप्रभाधरमकृत्रिमहृद्यगन्धं । यूनामतीव पिबतां रजनीषु यत्र तृष्णां जहार मधु नाऽननमङ्गनानाम् ॥

अत्रेवादीनां तुल्यादीनाञ्च पदानामभावेपि श्लिष्टविशेषणाक्षिप्तैवोपमा प्रतीयते एवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येपि भेदाः सम्भवन्ति तेप्यनयैव दिशा द्रष्टव्याः ॥ निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥ विवक्षितस्य प्राकरणिकत्वादनुपसर्ज्जनीकार्य्यस्याशक्यवक्तव्यत्वमतिप्रसि

ष्ट्वं वा विशेषं वक्तुं निषेधो निषेध इव यः स
माणविषय उक्तविषयश्चेति द्विधा आक्षेपः॥
णोदाहरणं ॥

एएहिकिं पिकीए विकएण णिक्कित्वभणामि अलम
अविआरिअकज्जारम्भआरिणी मरउण भणिस्सं॥ ज्योत्स्
न्तिकदामचन्दनरसः शीतांशुकान्तद्रवः कर्पूरं कदली
वलयान्यम्भोजिनीपल्लवाः। अन्तर्मानसमास्त्वया
तस्याः स्फुलिङ्गोत्करव्यापाराय भवन्ति हन्त किमथवा
न ब्रूमहे॥

क्रियायाः प्रतिषेधेपि फलव्यक्तिर्विभावना
रूपक्रियायानिषेधेपि तत्फलप्रकाशनं विभा
यथा॥

कुसुमितलताभिरहताप्यधत्तरुजमलिकुलैरदा
परिवर्त्तते स्म नलिनीलहरीभिरलोलिताप्यघूर्णत सा।

विशेषोक्तिरखण्डेषु कारणेषु फलावच
मिलितेष्वपि कारणेषु कार्य्यस्याकथनं विशेषो
अनुक्तनिमित्ता। उक्तनिमित्ता। अचिन्त्यनि
च। क्रमेणोदाहरणं॥

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदंपरा
श्लथाश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा॥

तुव दग्धोपि शक्तिमान्योजने जने। नमोस्त्ववार्य्यवीर्य्याय तस्मै मकरकेतवे॥ स एकस्त्रीणि जयति जगन्ति कुसुमायुधः। हरतापि तनुं यस्य शम्भुना न बलं हृतं॥

यथा संख्यंक्रमेणैव क्रमिकाणां समन्वयः॥

यथा॥

एकस्त्रिधा वससि चेतसि चित्रमत्र देवद्विषाञ्च विदुषाञ्च मृगीदृशाञ्च। तापञ्च संमदभरञ्च रतिञ्च पुष्णन् शौर्य्योष्मणा च विनयेन च लीलया च॥

सामान्यो वा विशेषो वा तदन्येन समर्थ्यते। यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा। साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत्समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः॥ क्रमेणोदाहरणं॥

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतं। पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतं॥ सुसितवसनालङ्कारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः। तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क नासि शुभप्रदः॥ गुणानामेव दौरात्म्याद्धुरि धुर्य्यो नियुज्यते। असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः॥ अहो हि मे बहुपराद्धमायुषा यदप्रियं वाच्यमिदं

मयेदृशं। तएव धन्याः सुहृदः पराभवं जगत्यदृ
येत्त्वयं गताः ॥

विरोधःसोविरोधेपि विरुद्धत्वेन यद्वचः।
वृत्तेरविरुद्धेपि विरुद्धयोरिव यदभिधानं
रोधः। जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धास्याद्गुणस्त्रि
क्रियाद्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश॥

अभिनवनलिनीकिसलयमृणालवलयादिदवद
सुभगकुरङ्गदृशोस्याविधिवशतस्त्वद्वियोगपविपाते।
प्यनुन्नतियुजोमरुदप्यचलोऽब्धयोप्यगभीराः विश्वम्भराप
र्नरनाथ तवान्तिके नियतं ॥ येषां कण्ठपरिग्रह
संप्राप्य धाराधरस्तीक्ष्णः सोप्यनुरज्यत च कमपि
शोति च। तेषां सङ्गरसङ्गसक्तमनसां राज्ञां त्वया
पांशूलां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकं॥
जगदिदमवति च संहरतिच हेलयैव योनियतं।
शतः शफरोजनार्दनः सोपि चित्रमिदं॥ सततं मुस
वज्रतरगृहकर्मघटनया नृपते। द्विजपत्नीनां कठिनाः
भवति कराः सरोज सुकुमाराः। पेशलमपि खलवच
तरां मानसं सुतत्त्वविदां। परुषमपि सुजनवाक्यं म
सवत्प्रमोदयति ॥ क्रौञ्चाद्रिरुद्दामदृषद्दृढोयं यद्
र्गलशातपाते। अभून्नवांभोजदलाभिजातः सभार्ग

पूर्वसर्गः ॥ परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्म
यस्मिन्ननुभवपथं येन गतवान्। विवेकप्रध्वंसादुपचितमहा
मोहगहनो विकारः कोप्यन्तर्जडयति च तापञ्च कुरुते ॥ अयं
रामेको निलयइति रत्नाकरइति श्रितोऽस्माभिस्तृष्णातर
लतमनोभिर्जलनिधिः। कएवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ समद मतङ्ग
मदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात्। चितितिलकलयि
टजुषि शङ्करचूडापगापि कालिन्दी ॥

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनं।

स्वयोस्तदेकाश्रययोः रूपं वर्णः संस्थानञ्च। उदा
हरणं ॥

पश्चादङ्घ्री प्रसार्य्य त्रिकनति विततं द्राघयित्वाङ्गमुच्चैरा
सज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय। घासग्रासा
भिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो मन्दं शब्दायमानो वि
लिखति शयनादुत्थितः क्ष्मां खुरेण ॥

व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ॥

व्याजरूपा व्याजेन वा स्तुतिः। क्रमेणोदाहरणं ॥

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो लज्जा
वर्जनमन्तरेण नरमामन्यच संदृश्यते। यस्त्यागन्तनुतेतरां

पं

सुखशतैरेत्यागतायाःश्रियः प्राप्यत्यागकृतावसाननमि यस्याःस्थितिः॥ हेहेलाजितबोधिसत्व वचसां किं वि यधेनाखिलत्वद्दृशः परः परहिताधाने गृहीतव्रतः॥ न्यजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने कृपया साहायकं यन्मरोः॥

सासहोक्तिः सहार्थस्य बलादेकं द्विवा एकार्थाभिधायकमपि सहार्थबलाद्यदुभय मकं सा सहोक्तिः॥यथा॥

सहदिअघणिसाहिं दीहरासासदण्डा सह मणि वाहधारा गलन्ति। तुहसुहअविओए तीएउव्वे अतणुलदाए दुव्वलाजीविदासा॥

श्वासदण्डादिगतं दीर्घत्वादिशाब्दं दिव दिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते। वि साविनान्येन यत्रान्यः सन्नचेतरः। क्वचिदशो क्वचिच्छोभनः॥ क्रमेणोदाहरणं॥

अरुचिर्निशया विना शशी शशिना सापि विना म उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनो लोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भ द्युतिसुन्दराशयोयं सुहृदा तेन विना नरेन्द्रसूनुः॥

परिवृत्तिर्विनिमयोयोऽर्थानां स्यात्समासमैः । परिवृत्तिरलङ्कारः ॥ उदाहरणं ॥

लतानामेतासामुदितकुसुमानां मरुदयं मतं लास्यं दत्वा श्रयति भृशमामोदमसमं । लताख्ध्वन्यानामहह दृशमादाय सहसा ददत्याधिव्याधिभ्रमरुदितमोहव्यतिकरं ॥

अत्र प्रथमेऽर्द्धे समेन समस्य द्वितीये उत्तमेन न्यूनस्य ॥

नानाविधप्रहरणैर्नृपसंप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् । दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥

अत्र न्यूनेनोत्तमस्य । प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः । तद्भाविकं । भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायोऽस्तीति भाविकं ॥ उदाहरणं ॥

आसीदञ्जनमत्रेति पश्यामि तव लोचने । भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिं ॥

अत्राद्येभूतस्य द्वितीये भाविनोदर्शनं । काव्यलिङ्गं हेतोर्वाच्यपदार्थता ॥ यथा ॥

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे क्वचिदपि भवन्तं प्रणतवान्। नमन्मुक्तः संप्रत्यहमतनु तिभाग्महेश क्षन्तव्यं तदिदमपराधद्वयमपि॥

अनेकपदार्थता यथा॥

प्रणयसखीसलीलपरिहासरसाधिगतैर्ललितशिरीषप्रसूनैरपि ताम्यति यत्। वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥

एकपदार्थता यथा॥

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरंपरां गिरिसुता कान्तालयालङ्कृतिं। अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे॥

एषु अपराधद्वये पूर्वापरजन्मनोरननमनं शस्त्रोपक्षेपो महामोहे सुखालोकोच्छेदित्वं क्रमसुतरूपो हेतुः। पर्यायोक्तं विना वाच्यवाचकत्वेन वस्तु यत्। वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत्प्रतिपादनं तत्प्रकारान्तरेण भङ्ग्यन्तरेण कथनात्पर्यायोक्तं॥ उदाहरणं

यं प्रेक्ष्यचिररूढापि निवासप्रीतिरुज्झिता। मदेनैरावणमुखमानेन हृदये हरेः॥

अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्य मपि शब्देनोच्यते तेन यदेवोच्यते तदेव व्यङ्ग्यं यथा तु व्यङ्ग्यं न तथोच्यते। यथा गवि शुक्ले चलति दृष्टे गौः शुक्लश्चलतीति विकल्पो यदेव दृश्यते तदेव विकल्पयति नतु यथा दृष्टं तथा यतोभिन्ना संसृष्टत्वेन दृष्टंभेदसंसर्गाभ्यां विकल्पयति उदात्तं वस्तुनः सम्पत्समृद्धियोगः ॥ यथा ॥

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्ज्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः। दूराद्दाडिम वीज शङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपते स्तत्त्यागलीलायितं ॥

महतां चोपलक्षणं। उपलक्षणमङ्गभावः। अर्था दुपलक्षणीयेऽर्थे ॥ उदाहरणं ॥

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी। निव सन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥

नचात्र वीरो रसस्तस्येहाङ्गत्वात् तत्सिद्धिहेता वेकस्मिन्यत्रान्यत्तत्करं भवेत्। समुच्चयोसौ तस्य प्रस्तुतस्य कार्य्यस्यैकस्मिन्साधके स्थिते साधकान्त राणि यत्र सम्भवति स समुच्चयः ॥ उदाहरणं ॥

दुर्व्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोत्युत्सुकं प्रेम नवं वयोतिकठिनाः प्राणाः कुलं निर्मलं। स्त्रीत्वं रोधि मन्मथसुहृत्कालः कृतान्तोक्षमी नोसख्यश्चतुराः विरहः सोढव्य इत्थं शठः ॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ते प्रियतमदूरस्थित्याद्युपात्तं एष एव समुच्चयः गेऽसद्योगे सद्सद्योगे च पर्य्यवस्यतीति न पृ च्यते तथाहि ॥

कुलममलिनं भद्रा मूर्त्तिर्मतिः श्रुतशालिनी भुजवल स्फीता लक्ष्मीः प्रभुत्वमखण्डितं। प्रकृतिः सुभगा ह्येते भिरयं जनो व्रजति सुतरां दर्पं राजंस्त एव तवा

अत्र सतां योगः उक्तोदाहरणे त्वसतां यो

शशी दिवसधूसरो गलितयौवना कामिनी सरो वारिजं मुखमनक्षरं स्वाकृतेः। प्रभुर्द्धनपरायणः सततं सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति नाशोभनयोगः सत्वन्या युगपद्या गुणक्रियाः च क्रियेच गुणक्रियेच गुणक्रियाः॥ क्रमेण रणं॥

विदलितसकलारिकुलं तव बलमिदमभवदाशु वि प्रबलमुखानि नराधिप मलिनानि च तानि जातानि। अ

पदे तथाविधोगः प्रियया चोपनतः सुदुःसहोमे॥ नववारिध
रोदयादहोभिर्भवितव्यञ्च निरातपत्वरम्यैः। कलुषञ्च तवाहि
तेष्व कस्मात्सितपङ्केरुहसोदरश्रिचक्षुः॥ पतितञ्च महीपतीन्द्र
तेषां वपुषि प्रस्फुटमापदाङ्कटाक्षैः॥

धुनोति चासिं तनुते च कीर्त्तिमित्यादेः कृपाण
पाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः
सुरालयेइत्यादेश्च दर्शनाद्यधिकरणे इत्येकस्मि
न्देशइति च नवाच्यम् एकं क्रमेणानेकस्मिन्
पर्यायः एकं वस्तु क्रमेणानेकस्मिन्भवति क्रियते वा
सपर्यायः॥ क्रमेणोदाहरणं॥

श्रोणीभारस्त्यजति तनुतां सेवते मध्यभागः पद्भ्यांमुक्ता
स्तरलगतयः संश्रिता लोचनाभ्यां। धत्ते वक्षः कुचसचिवता
मद्वितीयञ्च वक्त्रं तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन॥
यथावा। नन्वाश्रयस्थितिरियं तव कालकूट केनोत्तरोत्तर
विशिष्टपदोपदिष्टा। प्रागर्णवस्य हृदये वृषलक्ष्मणोथ कण्ठे
धुना वससि वाचि पुनः खलानाम्॥ यथावा॥ बिम्बोष्ठ एव
रागस्ते तन्वि पूर्वमदृश्यत। अधुना हृदयेप्येष मृगशावाक्षि
दृश्यते॥

रागस्य वस्तुतोभेदेप्येकतयाध्यवसितत्वादेक
त्वमविरुद्धम्॥

तत्ताणसिरिसहो अरर अणाहरणम्मि हिअअम्मे
विंवाहरेपिआणं निवेसिअं कुसुमवाणेन ॥

अन्यस्ततोऽन्यथा अनेकमेकस्मिन् क्रमेण भा
क्रियते वासोऽन्यः । क्रमेणोदाहरणं ॥

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं
पृथक्ति अथ कथयति मोहहेतुमन्तर्गतमिव हालह
लमेव ॥ तद्गेहं नतभित्तिमन्दिरमिदं लब्धावकाशं दि
धेनुर्जरती न दन्तिकरिणामेता घनाभा घटाः । सचुद्र
ध्वनिः कलमिदं सङ्गीतकं योषितामाश्चर्य्यं दिवसैर्द्विज
तीं भूमिं समारोपितः ॥

अथैकस्यैव हानोपादानयोरविवक्षित
परिवृत्तिः अनुमानं तदुक्तं यत्साध्यसाधनयो
पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः स
धर्मिण्ययोगव्यवच्छेदो व्यापकस्य साध्यं यथा ॥
यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं तत्रैव प्र
सन्तत्यमी मर्मस्पृशो मार्गणाः । तच्चक्रीकृतचापमञ्चि
प्रेखत्करः क्रोधनो धावत्यग्रत एव शासनधरः सत्यं स
स्मरः ॥

साध्यसाधनयोः पौर्व्वापर्य्यविकल्पे न किं
चित्यमिति न तथा दर्शितं विशेषणैर्यत्साकूतै
परिकरस्तु सः । अर्थादिशेष्यस्य ॥ उदाहरणं ॥

हौजसो मानधना धनार्चिता धनुर्भृतः संयतिलब्धकीर्त्तयः। न
हतास्तस्य नभेदवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुं॥

यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतस्तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनं। निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः नचैषापह्नुतिः प्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात्॥

उदाहरणं॥

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादि
विसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः। हा शैत्यं तुहिनाचलस्य
करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टो
ऽवताद्वः शिवः॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रकृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः किञ्चित्पृष्टमपृष्टं वा कथितं यत्प्रकल्प्यते। तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता। प्रमाणान्तरावगतमपि वस्तु शब्देन प्रति

पादितं प्रयोजनान्तराभावात्सदृशवस्त्वन्त
व्च्छेदाय यत्पर्यवस्यति सा भवेत्परिसंख्या प्र
कथनं प्रश्नपूर्व्वकं तदन्यथाच परिदृष्टं तथे
व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति
रोभेदाः। क्रमेणोदाहरणं॥

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेका
चरणयुगलं कौस्तुभभृतः। किमाराध्यं पुण्यं किम
यस्व करुणा यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति
यत्नं सुदृढमत्र यशोन रत्नं किं कार्यमार्य्यचरितं
दोषः। किञ्चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति क
सदसद्विवेकम्। कौटिल्यं कचनिचये करचरणा
रागस्ते। काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति
र्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे। चिन्ता
न वपुषि प्रायः परिदृश्यते महताम्॥

यथोत्तरं चेत्पूर्व्वस्य पूर्व्वस्यार्थस्य हेतुता
कारणमाला स्यात् उत्तरमुत्तरं प्रति यथा
उदाहरणं॥

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयाद
गुणप्रकर्षेण जनोनुरज्यते जनानुरागप्रभवाहि संपदः

हेतुमता सह हेतोरभिधानमभेदतो हेतुरिति हेत्वलङ्कारेण लक्षितः आयुर्घृतमित्यादिरूपो ह्येष नभूषणतां कदाचिदर्हति वैचित्र्याभावात्॥

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।
रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः॥

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैवस मास्नासिषुर्नपुन र्हेत्वलङ्कारः कल्पनयेति पूर्वोक्त काव्यलिङ्गमेव हेतुः क्रियया तु परस्परं वस्तुनोर्जन नेऽन्योन्यं अर्थयोरेकक्रियामुखेन परस्परंकारणत्वे सत्यन्योन्यंनामालङ्कारः॥ उदाहरणं॥

हंसाणंसरेहिं सिरीसारिज्जइ अहसराणंहंसेहिं। अणोणं विअ एए अप्पाणं णवरगरुअन्ति॥

अत्रोभयेषामपि परस्परजनकता मिथः श्रीसारतासंपादनद्वारेण उत्तरश्रुतिमात्रतः प्रश्न स्योन्नयनं यत्र क्रियते तत्र वासति। असकृद्यदसं भाव्यमुत्तरं स्यात्तदुत्तरम् प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते तदेकंतावदुत्तरं॥ उदा हरणं॥

वाणिअअ हत्थिदन्ताकत्तो अह्माणं वग्घकत्तीअ। जावल लिआलअ मुहीं घरम्मि परिसक्कइसोह्णा॥

इत्थिदन्तव्याघ्रकृत्तीनामहमर्थी मूल्येन ता
त्कोति क्रेतुर्वचनममुना वाक्येन समुन्नीयते।
तत्काव्यलिङ्गमुत्तरस्य तादृप्यानुपपत्तेः नहि
स्य प्रतिवचनं जनको हेतुः नापीदमनुमानं
धर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित
रान्तरमेवोत्तरं साधीयः प्रश्नादनन्तरं लो
क्रान्तगोचरतया यदसम्भाव्यरूपं प्रतिवच
त्तदपरमुत्तरं अनयोश्च सकृदुपादानेन च
प्रतीतिरित्यसकृदित्युक्तं ॥ उदाहरणं ॥

का विसमा देव्व गई किं दुलहं जणो गुणग्गाही।
सुकलत्तं किं दुःखं जं खलो लोओ ॥

प्रश्नपरिसंख्यायामन्यव्यपोह एव तात्प
तुनाच्यएव विश्रान्तिरित्यनयोर्विवेकः
लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते। धर्मे
चिद्यनतत्सूक्ष्मं परिचक्षते। कुतोप्याकारा
ताद्वा सूक्ष्मातीक्ष्णमतिसंवेद्यः ॥ उदाहरणं।

वक्रस्यन्दिस्वेदविन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि
पुंस्त्वं तन्व्याव्यञ्जयन्ती वयस्या स्मित्वा पाणौ ख
लिलेख ॥

अत्राकूतिमालोक्य कयापि वितर्कितं पुरुषायितमखिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं पुंसामेव कृपाणपाणिता योग्यत्वात् यथावा सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ईषन्नेत्रार्पिता कूतं लीलापद्मं निमीलितम् अत्रजिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितोनिशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः। उत्तरोत्तरमुत्कर्षोभवेत्सारः परावधिः। परः पर्य्यन्तभागोवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः ॥ उदाहरणं ॥

राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधं सौधे तल्पं तल्पे वराङ्गनानङ्गसर्व्वस्वं ॥ भिन्नदेशतयात्यन्तं कार्य्यकारणभूतयोः। युगपद्धर्मयोर्यत्र ख्यातिः साऽसादसङ्गतिः इहयद्देशङ्कारणं तद्देशमेव कार्य्यमुत्पद्यमानं दृष्टं ॥

यथा धूमादि यत्रहेतुफलरूपयोरपि धर्म्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनं सा तयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागादसङ्गतिः ॥ उदाहरणं ॥

जंसेअवणोतस्सेअवेअणाभणइ तं जणो अलिअं। दन्तक्खअं कवोले वहूए वेअणासवत्तीणं ॥

एषा च विरोधबाधिनी न विरोधः भिन्नाश्र-
तयैव द्वयोरिह विरोधितायाः प्रतिभासात् कि
हेतुविरोधित्वमेकाश्रयनिष्ठमनुक्तमपि पर्यव-
सपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थिते-
चेदं निदर्शितं। समाधिः सुकरं कार्य्यकारणान्त-
गतः। साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन का-
सारब्धमाधीयते स समाधिर्नाम॥ उदाहरणं।

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः। उपका-
रिव्येदमुदीर्णं घनगर्जितं॥

समं योग्यतया योगो यदि संभावितः क्वचि-
दिदमनयोः श्लाघ्यमिति योग्यतया सम्बन्धस्य नि-
विषयमध्यवसानं चेत्तदा समं तत्सद्योगेऽसद्यो-
च॥ उदाहरणं॥

धातुःशिल्पातिशयनिकषस्थानमेषा मृगाक्षी रूपे देवोऽ-
नुपमोदत्तपत्रः स्मरस्य। जातं दैवात्सदृशमनयोः सङ्गतं
देतच्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रं॥ यथावा॥
चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितर-
चनाविधाता विधाता। यन्निम्बानां परिणतफलस्फीतिरा-
स्वादनीया यच्चैतस्याः कवलनकलाकोविदः काकलोकः॥

क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्। कर्त्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्। गुणक्रियाभ्यां कार्य्यस्य कारणस्य गुणक्रिये। क्रमेण च विरुद्धे यत्स एष विषमो मतः। द्वयोरत्यन्तविलक्षणतया यदनुपपद्यमानतयैव योगः प्रतीयते यच्च किञ्चिदारभमाणः कर्त्ता क्रियायाः प्रणाशान्न केवलमभीष्टं तत्फलं न लभेत यावदप्रार्थितमप्यनर्थं विषयमासादयेत् तथा सत्यपि कार्य्यस्य कारणरूपानुकारे यत्तयोर्गुणौ क्रिये च परस्परविरुद्धतां व्रजतः स समविपर्य्ययात्मा चतूरूपो विषमः॥ क्रमेणोदाहरणं॥

शिरीषादपि मृदङ्गी केयमायतलोचना। अयं क्वचकुकूलाग्निकर्कशो मदनानलः॥ सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः। जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः॥ सद्यःकरस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा। तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते॥ आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वं। विरहस्त्वयैव जनितस्तापयतितरां शरीरमे॥

अत्रानन्ददानं शरीरतापेन विरुध्यते एवं॥

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपि- रे युगक्षये। मदविभ्रमासकलया पपे पुनः सपुरस्त्रियैक- तमया ॥

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यं। ... तोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्। आ- श्रयिणौ स्यातां तनुत्वेप्यधिकन्तु तत्। आ- माधेयं आश्रयस्तदाधारः तयोर्महतोरपि ... तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुत- ... विवक्षया यथाक्रमं यदधिकतरतां ... हिदं द्विविधं अधिकं नाम। क्रमेणोदाहरणं

अहो विशालं भूपालभुवनत्रितयोदरं। माति ... क्यापि यशोराशिर्यदत्र ते॥ युगान्तकालप्रतिसंहृता- ... गन्ति यस्यां सविकाशमासत। तनौ ममुस्तत्र न कैट- ... पोधनाभ्यागमसम्भवा मुदः॥ प्रतिपक्षमशक्तेन प्रतिक- ... क्रिया। या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥

न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमश- केनापि यत्तमेव प्रतिपक्षमुत्कर्षयितुं तदा- ... तिरस्करणं तदनीकप्रतिनिधितुल्यत्वात्प्र- मभिधीयते। यथानीकेऽभियोज्ये तत्प्रतिनिधि- मपरं गूढतया केनचिदभियुज्यते तथेह

योगिनि विजेये तदीयोन्योविजीयत इत्यर्थः॥ उदाहरणं॥

त्वं विनिर्जितमनोभवरूपः सा च सुन्दरभवत्यनुरक्ता। पञ्चभिर्युगपदेव शरैस्त्वां तापयत्यनुशयादिव कामः॥ यथा॥ यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः। कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥

इन्दोरत्र तदीयतासम्बन्धिमुखसम्बन्धात्। समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते। निजेनागन्तुना वापि तन्मीलितमिति स्मृतम्। सहजमागन्तुकं वा किमपि साधारणं यल्लक्षणं तद्द्वारेण किञ्चित्केनचिद्वस्तु स्थित्यैव बलीयस्तया तिरोधीयते तन्मीलितमिति द्विधा स्मरन्ति॥ क्रमेणोदाहरणं॥

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखं। इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया तदत्र न मदोदयः कृतपदोपि संलक्ष्यते॥

अत्र हक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकं साधारणञ्च मदोदयेन तत्राप्येतस्य दर्शनात्॥

ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विविशद्विषस्ते। अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं तेषामहोवत भियां नबुधोप्यभिज्ञः॥

अत्र तु सामर्थ्यादवसितस्य शैत्यस्यागन्तु-
त्पभवयोरपि कम्पपुलकयोस्ताद्रूप्यं समा-
श्रयेष्वपि तयोरुपलक्षितत्वात्। स्थाप्यतेऽपो-
वापि यथापूर्व्वं परम्परं। विशेषणतया यत्र
सैकावलीद्विधा। पूर्व्वंपूर्व्वं प्रति यद्योत्तरो-
वस्तुनोवीप्सया विशेषणभावेन यत् स्थापनं
धोवा सम्भवति सा द्विधा बुधैरेकावली भण
क्रमेणोदाहरणं॥

पुराणि यस्यां सवराङ्गनानि वराङ्गनारूपपुर
रूपं समुन्मीलित सद्विलासमस्त्रं विलासाः कुसुमायुध
ज्जलं यत्र सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदं।
दोषौ कलगुञ्जितोन योन गुञ्जितं तन्न जहार यन्म

पूर्व्वत्र पुराणां वराङ्गनास्तासामङ्गमि-
मुखेन रूपं तस्य विलासास्तेषामप्यस्त्रमित्यं
क्रमेण विशेषणं विधीयते उत्तरत्र प्रतिषे-
योज्यं। यथानुभवमर्थस्य दृष्टे तत्सदृशे
स्मरणं यः पदार्थः केनचिदाकारेण नियतः
कदाचिदनुभूतोभूत्स कालान्तरे स्मृतिप्रबोध
नितत्समाने वस्तुनि दृष्टे सति यत्तथैव सम
वेत्स्मरणं॥ उदाहरणं॥

